पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

# श्रीमन्युसूक्तम्

श्रीसायणाचार्यप्रणीतभाष्येण
श्रीधीरेन्द्रतीर्थीय-श्रीकृष्णावधूतपण्डितकृतव्याख्याद्वयेन च
समलङ्कृतम्

तथा

# श्रीधर्मसूक्तम्

श्रीसायणाचार्यप्रणीतभाष्येण
श्रीसत्यसन्धतीर्थविरचितव्याख्यया समलङ्कृतम्

सम्पादकः
चतुर्वेदी सि.आर्. प्रदीपसिंहाचार्यः

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२००८

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

# श्रीमन्युसूक्तम्

श्रीसायणाचार्यप्रणीतभाष्य-
श्रीधीरेन्द्रतीर्थीयश्रीकृष्णावधूतपण्डितकृतव्याख्याद्वयसमलङ्कृतम्

तथा

# श्रीधर्मसूक्तम्

श्रीसायणाचार्यप्रणीतभाष्य-
श्रीसत्यसन्धतीर्थविरचितव्याख्यया च समलङ्कृतम्

सम्पादकः
**चतुर्वेदी सि. अर्. प्रदीपसिंहाचार्यः**

प्रकाशनम्

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्,
बेङ्गलूरु - २८
२००८

पूर्णप्रज्ञसंशोधनामन्दिरग्रन्थमाला - ५१

**श्रीमन्युसूक्तम्** श्रीसायणाचार्यप्रणीतभाष्यश्रीधीरेन्द्रतीर्थीयश्रीकृष्णावधूत-पण्डितकृतव्याख्याद्वयसमलङ्कृतम्; तथा **श्रीधर्मसूक्तम्** श्रीसायणाचार्यप्रणीत-भाष्यश्रीसत्यसन्धतीर्थविरचितव्याख्यया च समलङ्कृतम्

सम्पादकः

**चतुर्वेदी सि.अर्. प्रदीपसिंहाचार्यः**

This publication is brought out by the generous financial help of
**Rastriya Sanskrit Samsthan,**
(Deemed University)

प्रकाशनम्

**पूर्णप्रज्ञसंशोधनमन्दिरम्**

पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मैन् रोड्,
बेङ्गलूरु - २८

पुटानि : ६६+११३

प्रथममुद्रणम् - २००८

मुद्रितप्रतिसङ्ख्या - १०००

**मूल्यम् :** १०० रूप्यकाणि

**अक्षरसंयोजनम् :**
शम्याप्रास प्रकाशनम् **(080)26391610**

**मुद्रणालयः :** लावण्यमुद्रणम्

**POORNAPRAJNA SAMSHODHANA MANDIRAM**
Recognised by Rastriya Sanskrit Samsthan, (Deemed University)
Ministry of H.R.D. Govt. of India, New Delhi.

# ŚRĪ MANYUSŪKTAṀ

(with commentaries of Sayanacharya,
Sri Dhirendratirtha and Sri Krishnavadhutapandita)
alongwith

# ŚRĪ GHARMASŪKTAṀ

(with commentaries of Sayanacharya,
Sri Satyasandhatirtha)

Editor:
chaturvedi C.R. PRADEEPASIMHACHARYA

PUBLISHER :
**POORNAPRAJNA SAMSHODHANA MANDIRAM**
**Poornaprajna Vidyapeetha, Bangalore : 560 028.**
**2008**

**Poornaprajna Samshodhana Mandiram Series : 51**

**ŚRĪ MANYUSŪKTAṀ** (with commentaries of Sayanacharya, Sri Dhirendratirtha and Sri Krishnavadhutapandita) alongwith **ŚRĪ GHARMASŪKTAṀ** (with commentaries of Sayanacharya, Sri Satyasandhatirtha)

Editor:

chaturvedi C.R. PRADEEPASIMHACHARYA

This publication is brought out by the generous financial help of
**Rastriya Sanskrit Samsthan,**
(Deemed University)

PUBLISHER :

**POORNAPRAJNA SAMSHODHANA MANDIRAM**
**Poornaprajna Vidyapeetha,**
**Katriguppa Main Road, Bangalore : 560 028.**

**Pages : 66+113**
**First Edition : 2008**
**Copies : 1000**
**Price : Rs. 100/-**

**Type setting :**
**Shamyaprasa Publications (080)26391610**

**Printed by :**
**Lavanya Mudranalaya.**

॥श्रीः॥

**श्रीश्री विश्वेशतीर्थश्रीपादाः**
श्री पेजावराधोक्षजमठः
जगद्गुरु श्रीमध्वाचार्यमहासंस्थानम्
उडुपि- ५७६१०१, कर्नाटक

# श्रीश्रीविश्वेशतीर्थश्रीपादानाम्

## अनुग्रहसन्देशः

अस्मदीयसकलानिष्टनिरसनाय अस्मदुपरि निरन्तरातिक्रमणशीलानाम् अगोचरदैत्यशक्तीनामुच्चाटनाय च मन्युसूक्तपठनं महत्साधनमिति महान्तोऽनुमन्यन्ते । नरहरेः महिमानुवर्णनात्मकमिदं मन्युसूक्तं न केवलं भौतिकानिष्टं, किन्तु आध्यात्मिकमप्यनिष्टं निस्सारयति । अज्ञानान्धतमसमलीमसं मानसं सज्ज्ञानसद्गुणप्रभया प्रद्योदयितुं नरहरिरविरेव शक्ष्यति ।

नरसिंहस्तुतिरूपं महामन्त्रं मन्युसूक्तं तथा संसारघर्मपरिहारानुकूलं घर्मसूक्तमपि सरलसुलभव्याख्यापुरःसरं पूर्णप्रज्ञसंशोधनमन्दिरं प्रकाशयतीति नितरां सन्तुष्यामः ।

एतादृशकृतिरत्नप्रकाशनेषु बद्धदीक्षान् संस्थाया निदेशकान् अस्मत्प्रियशिष्यान् आनन्दतीर्थनागसम्पिगेमहोदयान् एतत्कृतिकुसुममुपयुक्तटिप्पणीपुरःसरं सम्पादितवतः अस्मत्प्रियशिष्यप्रदीपसिंहाचार्यानपि सानन्दमभिनन्दामहे ।

इत्यनेकनारायणस्मरणानि
**श्री श्री विश्वेशतीर्थश्रीमच्चरणाः**

||श्रीः||

**श्री श्री विश्वप्रसन्नतीर्थस्वामीजी**
श्री पेजावराधोक्षजमठः
जगद्गुरु श्रीमध्वाचार्यमहासंस्थानम्
उडुपि- ५७६१०१, कर्नाटक

## ಶ್ರೀ ಶ್ರೀ ವಿಶ್ವಪ್ರಸನ್ನತೀರ್ಥಶ್ರೀಪಾದರ
## ಅನುಗ್ರಹಸಂದೇಶ

ಪೂಜಾಕಾಲದಲ್ಲಿ ನಿತ್ಯವಿನಿಯೋಗಿಸಲ್ಪಡುವ ಸೂಕ್ತಗಳಿವು. ಮನ್ಯುಸೂಕ್ತ ಹಾಗೂ ಘರ್ಮಸೂಕ್ತ. ವೇದೋಕ್ತಮಂತ್ರಗಳಿಂದ ಭಗವಂತನನ್ನು ಅರ್ಚಿಸುವಲ್ಲಿ ಮಂತ್ರಾರ್ಥ ತಿಳಿದಿದ್ದರೆ ಆಗ ಆ ಅರ್ಚನೆ ಸಫಲ. 'ಯದೇವ ವಿದ್ಯಯಾ ಕರೋತಿ ಶ್ರದ್ಧಯಾ ತದೇವ ವೀರ್ಯವತ್ತರಂ ಭವತಿ'. ವೇದಮಂತ್ರಗಳ ಅರ್ಥವನ್ನು ಮಹಾತ್ಮರ ಮಾತಿನಿಂದ ತಿಳಿಯಬೇಕು. ಕೃಷ್ಣಾವಧೂತರ ಮನ್ಯುಸೂಕ್ತಾರ್ಥ, ಹಾಗೂ ಸತ್ಯಸಂಧರ ಘರ್ಮಸೂಕ್ತಾರ್ಥ ಈ ನಿಟ್ಟಿನಲ್ಲಿ ಬಹಳ ಪ್ರಯೋಜಕಾರಿಯಾಗಿವೆ.

ಈ ತನಕ ಪ್ರಕಟವಾಗದೇ ಉಳಿದಿರುವ ಈ ಕೃತಿಗಳನ್ನು ಸಂಪಾದಿಸಿ ಸಂಶೋಧಿಸಿ ಪ್ರಕಟಪಡಿಸುತ್ತಿರುವ ಸಿ.ಆರ್.ಪ್ರದೀಪಸಿಂಹಾಚಾರ್ಯರ ಈ ಪ್ರಯತ್ನ ಶ್ಲಾಘ್ಯ-ವಾದದ್ದು. ಶ್ರೀಯುತರಿಂದ ಇಂತಹ ಜ್ಞಾನಕಾರ್ಯ ನಿರಂತರ ನಡೆಯುತ್ತಿರಲೆಂದು ಹರಿಗುರುಗಳಲ್ಲಿ ಪ್ರಾರ್ಥಿಸುತ್ತೇವೆ.

ಇತಿ ನಾರಾಯಣಸ್ಮರಣೆಗಳು

ಶ್ರೀ ಶ್ರೀ ವಿಶ್ವಪ್ರಸನ್ನತೀರ್ಥಶ್ರೀಪಾದರು

॥श्रीलक्ष्मीहयग्रीवो विजयते ॥

**श्री श्री विश्वनन्दनतीर्थश्रीपादाः**
श्रीक्षेत्र हनसोगे मध्वमठः
हनसोगे, के.आर्. नगर ताल्लूकु
मैसूरु जिल्ला, कर्नाटक.

# श्रीश्रीविश्वनन्दनतीर्थश्रीपादानाम्
## अनुग्रहसन्देशः

'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिसिद्धो अविप्लुतोऽर्थः भगवान्नारायण एव सर्ववेदप्रतिपाद्य इति । सत्यप्येवं सन्ति सूक्ताः स्फुटं विष्णुमहिमाप्रतिपादकाः पौरुषादयः । एतन्मध्यपतितौ मन्युसूक्तघर्मसूक्तौ क्रमेण कृष्णावधूतशिरोमणिना श्रीमत्सत्यसन्धतीर्थैश्च कृताभ्यां टीकाभ्यामलङ्कृत्य बुभुत्सुजनेषु समर्प्यते अधुना पूर्णप्रज्ञसंशोधनमन्दिरेणेति महन्मोदस्थानमिदम् । इतः पूर्वमप्रकटित एते टीके संशोध्य सम्पाद्य स्ववैदुष्यं सम्पादनकौशलं च प्रकटितवन्तं प्रदीपसिंहाभिधानं तरुणविद्वांसं सहृदयमभिनन्दामः ॥

कृष्णावधूतेन कविना कृतायां टीकायां मन्युसूक्तस्य देवता श्रीराम इति निर्दिष्टम् । प्राचीनटीकाकारास्तु नृसिंह इति निर्दिष्टवन्तः । अनेन कविना रामहनूमन्तौ मुख्यामुख्यदेवते इति निर्दिश्य द्वित्रस्थलेष्वेव तत्परतया स्फुटं व्याक्रियते । यथा प्रथममन्त्रे 'वज्रसायक' इत्यत्र 'वज्रसदृशबाणयुक्त' इति 'नखरूपबाण' इति च । अन्यत्र तु सामान्यत एव शक्तिग्रहादिप्रार्थनारूपतया व्याख्यायते । रामपरतया वा हनुमत्परतया वा कापि योजना न सूच्यते । 'मन्युः' इत्यस्य 'क्रोधाभिमानी' इति व्याख्या कृता । तन्न बुध्यामहे यतो अभिमानित्वं नामास्वतन्त्रनियामकत्वम् । भगवांस्तु स्वातन्त्र्येण क्रोधनियामक

एवेति । एतद्व्याख्यानशैली अतिसरला प्रतिपदमर्थावबोधने अत्युपयुक्ता चेति सन्तोष्टव्यम् ॥

सत्यसन्धीया टीका तु व्याकरणप्रक्रियाभिः जटिला अपि प्रतिपदमर्थबोधने सहायिका राराजते ॥

प्रदीपसिंहेन दत्ताः पादटिप्पण्यः पीठिका परिशिष्टं च बुभुत्सूनामत्यन्तोपकारकमिति मन्यामहे । पीठिकायां व्यक्तमिदम् 'ऋक्ष्वेव डकारस्य ळकारादेशः' इति । ऋग्भाष्यटीकाटिप्पण्यनुरोधेन प्रतिपादितं च । अनेन श्रीमद्भागवते यथाकामं ळकारप्रक्षेपं कुर्वन्त आधुनिका निरस्ता वेदितव्याः ॥

एतादृशज्ञानकार्याणि इतोऽप्यतिशयतया प्रचलत्विति ज्ञानदायकमस्मदुपास्यं श्रीहयग्रीवं प्रार्थयामहे ॥

इत्यनेकनारायणस्मरणानि

**श्रीश्रीविश्वनन्दनतीर्थाः**

सर्वजित्सं, चैत्र, कृष्ण द्वितीया.

४-४-२००७

## Director's Note

# Manyu Sukta

Manyu Sukta is famous as the most auspicious saga of Lord Narasimha. By worshiping him and meditating upon him as the very embodiment of total knowledge and happiness in all sincerity and earnestness, it is certain that all the sins and sufferings in this life and beyond, and all the hurdles in the spititual progress of the liberation seeker are washed off completely leaving no trace of them. 'नृसिंहादिकमन्यश्च दुरितादिनिवृत्तये' By the Punascharana that is, by repeating the Sukta in the Prescribed way with all details precisely on can surely eradicate all diseases, and can cleared off all the accusations, freeing oneself from both internal enemies and external enemies. This result has been experienced by innumerable devotees in the world. It is a sure cure. Not only it wards off the hurdles in the real progress,the Lord Narasimha blesses us with perfect knowledge and spiritual progress, as He is the Supreme addressed to.

To this Sukta which appears in Rg.Veda, Sri Sayanacharya who has commented on all the four vedas in his typical masterly way has commented on ManyuSukta also, which has enriched this volume. The Speciality of this volume is it has notes on Manyusukta by Krishnavadhutha who has highlighted the glory of Sri Hari and Vayu viewing Narasimha as Sri Ramachandra.

# Gharma Sukta

Gharma Sukta is the expression of the collection of the attributes of Sri Hari by Charturmukha Brahman who has thoroughly experienced and enjoyed the Spirit of them.

The purport of Gharma Sukra is that the Supreme Hari pervades all space and worshipped by all the deities. We have given here the commentary on Gharma Sukta by Sri Satyasandhatirtha, one of the great commentators of Sri Uttaradhi matha line age.

The source of inspiration behind this useful venture is our founder **H.H. Sri Sri Vishveshatirtha Swamiji.** We express our gratitude and Pranamas.

We express our gratitude to **Prof. V. Kutumba Sastry,** Vice-chancellor of Rashtriya Sanskrit Sansthan, New Delhi and **Sri C.S. Kaniyal,** Finance Officer, Rashtriya Sanskrit Sansthan, New Delhi, for giving all-round support in academic activities.

**Vidwan Pradeepasimhacharya,** a young scholar had presented here a comparitive and critical study of different commentaries and has made it a worthy useful collection of Scholars.

His notes, foot notes and a detailed introduction are quite exhaustive. These are very useful for any one who makes a thorough study and research.

I appreciate and heartily congratulate this Young up-coming scholars for the efforts he has put in bringing out this volume and look forward eagerly to his further contributions.

I thank **Sri Seetharam Rao** for rendering the summary of Manyu Sukta in English.

I thank the **Lavanya Mudrana,** for their co-operation and for the neat get up.

Sujanavidheya

**Dr. A.V. Nagasampige**

Director

Poornaprajna Samshodhana Mandhiram

# प्राग्व्याहृतिः

## भगवान् सर्ववेदार्थः

ब्रह्मतत्वं हि सत्सम्प्रदायाभिज्ञशिक्षितबुद्धेरेव वेदेषु पदसमन्वयेन वा वाक्यसमन्वयेन वा भासते इति पञ्चमतात्पर्ये आचार्याः । अन्यत्र भरतोऽप्याह रहूगणं प्रति 'न छन्दसा नोत जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम्' भगवज्ज्ञानं हि **छन्दसा** सम्प्रदायानभिज्ञव्याख्यातेन वेदन न भवतीत्यर्थः (यादुपत्यम्)' इति । तेन वेदार्थज्ञानस्य दुष्करत्वं स्पष्टीभवति ॥ 'पठेद्वेदानर्थानधीयीताथ विचार्य ब्रह्म विन्देत्' (ब्र.सू.भा.उ) इति कौषारवश्रुतिरपीममेवार्थमाह ।

''न वेदेषु पदं किञ्चिद्वर्णो वा व्यर्थ इष्यते ।
यथायोगं चार्थभेद ऊह्यः सर्वत्र वेदिभिः''

(ऐ.उ.भा (४-२). उदाहृतशब्दनिर्णयवचनम्)

''वेदादिवर्णपर्यन्तैः मूर्तयः केशवस्य तु ।
समासव्यासयोगेन वाच्यास्तात्पर्यतः पृथक्'' (ऋ.भा)

इत्याद्युक्तदिशा समस्तवेदमारभ्य ऋगादिशाखाष्टकाध्यायसूक्तवर्गऋगर्धर्चपादर्चद्वारा वर्णपर्यन्तः सर्वोऽपि वर्णसमुदायः परममुख्यवृत्त्या स्वातन्त्र्येण परस्यैव वाचकः ॥

''सर्वशब्दगताश्चैव वचनान्यखिलान्यपि ।
स्वतन्त्रत्वात्प्रवर्तन्ते व्यावृत्तेऽप्यखिलाद् रवात् ॥
तत्सम्बन्धात्तु जीवेषु तत्सम्बन्धादचित्स्वपि ।
वर्तन्त उपचारेण तिङ्पदान्यखिलान्यपि ॥
तस्मात्सर्वगतो विष्णुरेकोऽभिच्च ततो बहुः''

– इति च नारायणश्रुतिः ॥

## वेदाभिमानिषु तारतम्यम्

'यकारो वायुबीजः स्यात्' इत्यादि तान्त्रिकप्रसिद्ध्या वर्णादीनामवान्तराभिमानिनो वाच्याश्च देवताः सन्ति । तत्र अभिमानितोऽपि वाच्यस्य श्रैष्ठ्यं प्रत्यपादि भगवत्पादैः प्राधान्यवचनोदाहरणेन भागवततात्पर्यनिर्णये एकादशस्कन्धे । तथाहि – उद्धवं प्रति स्वविभूत्याख्याने "पदानि च्छन्दसामहम्" इति भगवद्वचनम् । तत्र च तात्पर्यम् –

वर्णेशानि पदान्याहुः पादाश्चापि तदीश्वराः ।
पादानामीश्वरार्धर्चा तदीशा ऋच एव तु ।
ऋचामधीशा वर्गास्तु तेषां सूक्तमधीश्वरम् ॥
सूक्ताधीशास्तथाध्यायास्तदधीशास्तथाष्टकाः ।
तदधीशास्तथा शाखा वेदाश्चापि तदीश्वराः ॥
वेदानामीश्वरा वाच्या वाच्यानामीश्वरो हरिः ।
न हरेरीश्वरः कश्चित् कदाचिदपि विद्यते ॥" इत्यादि ।

तदयं तारतम्यक्रमः - ये पञ्चाशद्वर्णाः वैदिकवाङ्मयप्रसिद्धाः तदभिमानिभ्यो तद्वाच्या उत्तमाः । वर्णवाच्येभ्यः सुप्तिङन्तात्मकपदाभिमानिन उत्तमाः । पदाभिमानिभ्योऽपि पदवाच्या उत्तमाः । पदवाच्येभ्यः पादाभिमानिनः उत्तमाः । पादाभिमानिभ्यः पादवाच्या उत्तमाः । पादवाच्येभ्य अर्धर्चाभिमानिन उत्तमाः । अर्धर्चाभिमानिभ्य अर्धर्ग्वाच्या उत्तमाः । अर्धर्ग्वाच्येभ्य ऋगभिमानिन उत्तमाः । ऋगभिमानिभ्य ऋग्वाच्या उत्तमाः । ऋग्वाच्येभ्यः वर्गाभिमानिन उत्तमाः । वर्गाभिमानिभ्यो वर्गवाच्या उत्तमाः । वर्गवाच्येभ्यः सूक्ताभिमानिन उत्तमाः । सूक्ताभिमानिभ्यः सूक्तवाच्या उत्तमाः । सूक्तवाच्येभ्य अध्यायाभिमानिन उत्तमाः । अध्यायाभिमानिभ्य अध्यायवाच्या उत्तमाः । अध्यायवाच्येभ्य अष्टकाभिमानिन उत्तमाः । अष्टकाभिमानिभ्य अष्टकवाच्या उत्तमाः । अष्टकवाच्येभ्यः शाखाभिमानिनः उत्तमाः । शाखाभिमानिभ्यः

शाखावाच्या उत्तमाः । शाखावाच्येभ्यः वेदाभिमानिन उत्तमाः । वेदाभिमानिभ्यः वेदवाच्या उत्तमाः । वेदवाच्येषु परात्परतरो हरिरेवोत्तमः । 'न हरेः परमो न हरेः सदृशः' इति परमं वैदिकं वचश्चकासते ।। वर्णाद्यभिमानिषु तत्तद्वाच्येषु च सर्वत्रोत्तमत्वं तत्तन्निष्ठभगवद्रूपाधीनमिति ज्ञेयम् ।।

सर्ववेदाभिमानिनस्तावद् गायत्री-ब्रह्मणोर्जाताः इति (बृ.उ.भा) प्रकाशिकायामुक्तम् । तत्र सर्ववेदाभिमानिष्वेको विशेषः वैशेष्ये उक्तः । तथाहि - सर्ववेदाभिमानिन्यः देव्यः । ताभ्यो देवीभ्यः सर्ववेदार्थरूपाः तत्तद्देवीपतय उत्तमाः । तत्रापि - शची उत्तमा । शचीदेव्याः तत्पतिरिन्द्र उत्तमः । इन्द्रादुत्तमा उमा । उमादेव्या उत्तमः रुद्रः । रुद्रादपि भारती-सरस्वत्यौ उत्तमे । तयोः प्राण-ब्रह्माणौ उत्तमौ । प्राण-ब्रह्मणोः तन्माता वेदाभिमानिनी श्री-भू-दुर्गा -जयन्ती इत्याद्यनेकरूपाभिन्ना लक्ष्मीः उत्तमा । तत्र -वेद-यज्ञ -दक्षिणारूपेण ऋग्-यजुस्-सामवेदानामभिमानिनी उत्तमेत्युच्यते । केवलवेदादपि तदर्थभूतविष्णुपूजारूपयज्ञस्य ज्यैष्ठ्याद् वेदादप्युत्तमवेद फलीभूतयज्ञाभिमानिनी बहिर्निष्ठवेदाभिमानितया बहिःस्थितरमारूपाद् भगवदङ्काश्रिता यज्ञाख्या लक्ष्मीः अभिमन्यमानतारतम्यात् स्थानाधिक्येनाधिका । ततोऽपि सैव लक्ष्मीः हरिणा रतियोग्या भगवदुरस्थलमाश्रिता, केवलयज्ञादपि ऋत्विक्कृतपुण्यश्रेयःसम्पत्त्या यजमानकृतयज्ञपूरकत्वाद् यज्ञकालीनर्त्विच्छ्रमनिवर्तकत्वाच्चोत्तमाया दक्षिणाया अभिमानिनी दक्षिणाख्या भगवद्धामार्धा तद्रूपेण स्थानवैशेष्यादन्यरूपेभ्य उत्तमा । एवं सावधिकोत्तमा लक्ष्मीः । भगवांस्तु निरवधिकोत्तम इति हि परमसिद्धान्तः ।।

## सूक्तव्यवस्था

यद्यपि प्रत्यृचं भगवतो बहुरूपाणि इति निरूपितं तैत्तिरीये 'भूरिति वा ऋचः' इति । 'प्रत्यृचं बहुरूपत्वाद्बहुवचनम्' इति प्रकाशिकाकारा अवोचन् । तथापि लोके अनेकर्गात्मकसूक्तानि इन्द्राग्न्यादिबहुदेवताकानीति

दृश्यन्ते । तेषां भगवति समन्वयप्रकारस्त्वित्थं सूत्रकारैरेव प्रथमस्य द्वितीयपादे समर्थितम् । तद्यथा - ब्रह्मण्यमुख्यस्यान्यत्र च मुख्यस्य कस्यचिदपि शब्दस्याभावेन अनन्यगतिकतया अन्यत्रापि (अग्न्यादौ) प्रयोग इति वा, अथवा अग्न्यादिसूक्तादिभिर्ब्रह्मोपासनया अग्न्यादावेव तदुपासकानां ब्रह्मणो अभिव्यक्तिरिति वा, अग्न्यादिसूक्तोपासकैरग्न्यादावेव ब्रह्मानुस्मरणस्य विहितत्वात् तत्तन्नाम्ना सूक्तानीति वा,तत्तत्सूक्तोपासकानां तत्तत्सूक्तप्रतिपाद्य-देवतान्तस्थब्रह्मप्राप्तिरिति वा नाम्ना सूक्तभिदा इति । अत एव तैत्तिरीयै-रन्यत्राप्याम्नातं 'यश्छन्दसामृषभो विश्वरूपः' इति । तद्विवृतं च प्रकाशिकायाम् ''विश्वस्मिन् इन्द्रादौ रूपमन्तर्यामिरूपं यस्येति विग्रहः । तथाच इन्द्रादिसूक्तान्यापि 'गुहाशयायैव न देहमानिने' इति स्मृतेरिन्द्राद्यन्तर्यामि-विषयिणीत्येकवाक्यता'' इति ॥

## वेदाध्ययनकाले चिन्तनीयभगवन्मूर्तयः

1. वेदसमुदाये -ब्रह्म
2. ऋग्वेद -सामवेदयोः -व्यानाख्यप्राणगो विष्णुः ।
3. सामवेदे सामनामा
4. संहिताध्ययनकाले - पृथिवीस्थो वराहः ।
5. पदाध्ययनकाले -वामनः ।
6. क्रमाध्ययनकाले- नृसिंहः ।
7. वर्णेषु -वर्णः-(वरणीय इत्यर्थः)
8. स्वरेषु -दिक्पालो वरुणः,स्वरनामा हरिश्च (स्वरमण इत्यर्थः ) **सौवरः ॥**

''मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ यतः''

इति कर्मतत्ववचनं मन्त्रार्थचिन्तनस्यात्यावश्यकत्वं प्रथयति । तत्राप्यादौ

“ऋषिच्छन्दो दैवतानि ब्राह्मणार्थस्वराद्यपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते”
“वर्णाक्षरनियोगादि नियोगो अक्षर एव च ।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे”

इत्याद्यनेकस्मृतिवशात् मन्त्रार्थज्ञानात् प्राक् ऋष्यादिचिन्ता अवश्यम्भाविनीति ज्ञायते ॥

## ऋषिः

ऋषिरिति त्वेका जातिः । देव-आसुर-यक्ष-इत्यादिवत् । तेषां सङ्ख्या तु शतकोटिः । एते ब्रह्मकृताष्टविधदेवसर्गे जाताः । तन्मध्ये शतम् ऋषय एव तारतम्ये विशेषस्थानमापन्नाः । तत्रापि विश्वामित्रादयः विंशतिसङ्ख्याकाः तारतम्यकक्ष्यायामधिकाः । यथा - नारदः १४, भृगुः -१५, विश्वामित्रः, मरीचि-अत्रि-अङ्गिर-पुलस्त्य-पुलह-क्रतु-वसिष्ठख्याः सप्त पूर्वमहर्षयः १६, ब्रह्मणो मानसपुत्राः सनक-सनन्दन-सनातनाः, ऋभुः-हंसः-अरुणः-यतिश्चेति सप्त ऊर्ध्वरेतसः इत्यादयः एतान् विहाय अवशिष्टाशीतिस्तु १९ कक्ष्यायामास्थिताः ।

‘ऋष्यशीतिस्तथासप्त पितरो....।
...अल्पाधिकारिणः प्रोक्ताः’

इति पञ्चमतात्पर्योक्तब्रह्माण्डवचनं च तेषामल्पाधिकारित्वमाह । तत्र आधिकारिकाः केचित् ‘ऊर्ध्वस्रोतसः’ इत्युच्यन्ते । तत्रापि न सर्वे मन्त्रद्रष्टृत्वादिलक्षणोपेताः ॥ ‘षोडशादारभ्य अष्टकपर्यन्तम्’ इति तु ऋषीणां देहलक्षणानि । ‘आष्टकादृषयश्चोक्ताः’ इति बृहद्भाष्ये महासंहितावचनम् । अवशिष्टशतोनशतकोटयस्तु २९ कक्ष्यायामास्थिताः ॥

शाखा,सूक्तादिद्रष्टॄणां तारतम्ये स्थानं किमिति स्पष्टं नोपलभ्यते ॥

देव-ऋषि-पित्र्याख्यैस्त्रिभिर्ऋणैः जायमानेन पुरुषेण ऋषिऋणपरिहारार्थं स्वाध्यायो अध्येतव्यः। 'स्वाध्याये ऋषिसंस्मृत्या ऋषीणां च सदाश्रयः' इति नारायणश्रुतिः, 'ऋषीणामाश्रयश्चापि स्वाध्यायेष्वृषिसंस्मृतेः' (बृ.उ.भा.उ) इति भविष्यत्पर्ववचनं च अध्ययने ऋषिस्मरणस्य कर्तव्यत्वम्, ऋष्याश्रयभगवद्विज्ञानेन ज्ञातुरविनाशित्वं च बोधयति ॥

ऋषिरिति त्रिकालदर्शिनो नाम इति कोषकाराः। परन्तु न ऋषिषु सर्वे त्रिकालज्ञाः, केचन एव तथा स्युः। वेदविषये विचार्यमाणर्षित्वं तु तद्द्रष्टृत्वमात्रम्। '४-१-११४' पाणिनिसूत्रवृत्तावपि 'ऋषयो मन्त्रद्रष्टारः' इति केषाञ्चिदेव मन्त्रद्रष्टृत्वमुक्तम्। 'समाननाम' इति ब्रह्मसूत्रभाष्यव्याख्याने अन्यमतद्वयेऽपि ''मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दर्शतय्यो दृष्टाः''(शां.भा.) ''वेदः पूर्वतन एव वसिष्ठादिभिर्दृश्यते'(रा.भा.) इति ऋषीणां मन्त्रद्रष्टृत्वमेवाङ्गीकृतम्, नतु तत्कर्तृत्वम्। 'तस्य महतो भूतस्य निश्वसितम्' इत्युक्तदिशा भगवान् हि उच्छ्वासमुखेन वेदद्रष्टा। अन्ये ब्रह्मादयस्तु तदुपदेशादिनेति विवेकः। 'वेद इत्येव विष्णूक्तस्तपसा दृश्यते परैः' इति हयग्रीवसंहितावचनं च भगवतो अन्येषां च वेदद्रष्टृत्वे वैलक्षण्यमाह ॥

शौनकमहर्षिणा आर्षानुक्रमण्यां द्रष्टॄणां नामान्युद्घोषितानि। तथा कात्यायनेनापि सर्वानुक्रमण्याम्। परन्तु नाम्नि ह्रस्वदीर्घादिव्यत्ययेन क्वचित् विप्रतिपत्तिर्दृश्यते। तद्यथा -

| आर्षानुक्रमणीपाठः | सर्वानुक्रमणीपाठः - |
|---|---|
| १. नवस्युः | नावसुः (मं ५/सू.३१) |
| २.प्रभुवसुः | प्रभूवसुः |
| ३.प्रतिप्रभः | प्रतिप्रभुः इत्यादि। |

क्वचिद् भिन्ना एव ऋषय अनूद्यन्ते -यथा १०-१८६ सूक्तस्य ॥

किञ्च आर्षानुक्रमणीतो सर्वानुक्रमण्यामेवाधिकविचारः दृश्यते । तथाहि अष्टममण्डले ४८ सूक्तानन्तरम् 'वालखिल्य'इति प्रथितानामेकादशसूक्तानाम् ऋषिनिरूपणमार्षानुक्रमण्यां न दृश्यते ॥ यद्यप्येतानि 'माक्स् मुल्लर्' सम्पादितऋग्वेदे न समुपलभ्यन्ते, नवा सायणेन व्याख्यातान्यपि ॥ परन्त्वेतानि संहितान्तर्गतान्येवेति शौनककृतानुवाकानुक्रमणीतो स्पष्टम् । 'द्वे चैव सूक्ते नवतिं (९२)च विद्यादथाष्टमम्'इति हि तत्रानुक्रान्तम् । एषां संहितानन्तर्गतत्वे नवतित्वं व्याहन्येत ॥ तथा बृहद्देवतायां षष्टाध्याये -'ऐन्द्राण्यभि तु' इत्यादिनैतेषां देवतोल्लेखश्च न सङ्गच्छेत ॥

भगवत्पादोक्तदिशा समस्तवैदिकवाङ्मयस्य ऋष्यादिकं तावत् सङ्क्षेपतो वर्णयिष्यते ।

ऋषयस्तावच्चतुर्धा । असङ्कुचिताविभक्तसर्वविद्याऋषयः । अखिलवेद-ऋषयः । ऋगाद्यवान्तरभेदर्षयः । अवान्तरशाखोपशाखा(सूक्तादि)-ऋषयश्चेति । तत्र सर्वविद्याऋषयः षट् - विष्णुः, रमा, ब्रह्मा,वायुः, सरस्वती भारती चेति । विभक्तविद्यानां मध्ये अपौरुषेयाखिलवेदर्षिः -सुपर्णः (सौपर्णी) । पञ्चरात्रर्षी द्वौ -शेषः (वारुणी),रुद्रः (पार्वती)चेति ॥

ऋगाद्यवान्तरभेदर्षयस्तु – ऋग्वेदस्य शक्रः । यजुषः सूर्यः । अथर्वस्य अग्निः,भृगुः । साम्नः -सोमः ॥ ऋचामपि शाखाभेदेन अनेके ऋषयः । शाकलशाखायाः शाकलऋषिः,बाष्कलशाखायाः बाष्कलऋषिरित्येवम् चतुर्विंशतिशाखाद्रष्टारः । एवं निगदे द्वादशशाखाद्रष्टारः,अथर्वे एकशतशाखाद्रष्टारः,साम्नि सहस्रशाखाद्रष्टारः ।

अथ पुनः उपशाखाऋषयः सूक्तद्रष्टार इति यावत्, त अनेके । क्वचित् प्रतिसूक्तं प्रतिवर्गं प्रत्यर्चं प्रतिपादं च भिन्नाः । क्वचिदेकस्यैव सूक्तस्यानेके ऋषयः ।

क्वचित् विकल्पेन-द्वौ यथा -१-१०५ सूक्तस्य आप्त्यस्त्रितः, कुत्सो वा इति ।

पूर्वार्धस्यैकः उत्तरार्धस्यैको यथा-दशमे -१३४ सूक्ते ६ मन्त्रे पूर्वार्धस्य मान्धाता यौवनाश्वः, उत्तरार्धस्य गोधा ऋषिः ।

त्रयो यथा -दशमे ६० सूक्तस्य - बन्धुः, श्रुतबन्धुः, विप्रबन्धुः गौपायनाः इति त्रयः ।

क्वचित् विकल्पेन- त्रयः १०-१९ मथितो यामायनः,भृगुर्वारुणिर्वा, भार्गवश्च्यावनो वा ।

चत्वारो यथा -८-१०२ भार्गवः अग्निर्बार्हस्पत्यः, पावको वा सहसः पुत्रौ गृहपति-यविष्ठौ,तयोर्वा अन्यतरः ।

पञ्च यथा ५-४४ -१ क्षत्र, मनस, एवावद, यजत, सध्रिअवत्साराः ।

क्वचित् सप्त -यथा दशमे १३७ सूक्तद्रष्टारः सप्तऋषयः । क्वचित् -शतम्,नवमे -६६ सूक्तं शतवैखानसदृष्टम् ॥

किञ्च मन्त्रद्रष्टारो हि भगवदारभ्य मनुष्यपर्यन्तम् वर्तन्ते । तत्र केचन विशेषास्तावत् सङ्गृह्यते –

भगवतो रूपविशेषाः- भार्गवरामेण दृष्टं सूक्तं ११० दशमे ऋग्वेदगत-दशाप्रीसूक्तेश्वन्तिममाप्रीसूक्तम् ।

कृष्णेन दृष्टं सूक्तत्रयम् - ऋग्वेदे १०-४२सूक्तमेकम्,

अथर्वे - २०काण्डे १७,८९ इति सूक्तद्वयम्,

लक्ष्म्या रूपविशेषाः - वागम्भृणी - दशमे -१२५ सूक्तस्य द्रष्ट्री

केचिद् देवर्षयः -यथा पर्वतनारददृष्टं नवमे १०५ सूक्तम् ।

क्वचिद् देवगन्धर्वः -१०-१३९ सूक्तस्य विश्वावसुः,

काश्चिद् अप्सरसः -यथा -ऊर्वशी-१०-९५ सूक्तस्य

क्वचिद् देवशुनी १०- १०८ सूक्ते २,४,६,८,१०,११,मन्त्रद्रष्ट्री सरमा ।

क्वचिद् सर्पः -१०-९४ सूक्तस्य अर्बुदः काद्रवेयः सर्पः ।

क्वचित् पक्षिणः -यथा 'अयमग्ने जरिता' इति १०-१४२ सूक्तम् ।

१०-१४४ सूक्ते सुपर्णस्ताक्ष्र्यपुत्रः,

क्वचित् राजर्षयः -नाहुषो ययातिः नवमे -१०१ सूक्तम्, पुरूरवाः -१०-९५, पृथुर्वैन्यः- १०-१४८,

शिबिरौशीनरः, काशिराजो प्रतर्दनः,रौहिदश्वो वसुमनाश्च -१०-१७९ सूक्तस्य द्रष्टारः ।

क्वचित् मानवः - दशमे -६२ सूक्तद्रष्टा नाभानेदिष्टो मानवः ॥

तदेवं स्थिते प्रकृतसूक्तद्रष्टा -कः ? 'मन्युः' इति । पुराणेष्वपि मन्योरुल्लेखो दृश्यते । यथा भागवते नवमे -"वितथस्य सुतान्मन्योः" इति । नायं मन्युः सूक्तद्रष्टा ॥ द्रष्टुः "विंशल्लक्षणतोऽनूनस्तपस्वी बहुवेदवित्" इत्यादि लक्षणोक्तेः, द्रष्टुः 'तापसो मन्युः' इति तापसपुत्रत्वोक्तेश्च । तेन नवममण्डलस्थसप्तनवतितमसूक्तगतदशम,एकादश-द्वादशमन्त्राणां द्रष्टा 'वासिष्ठो मन्युः' व्याख्यातः । किञ्च तापसो अग्निरपि वर्तते- दशमे १४१ सूक्तद्रष्टा । अपरस्तापसो घर्मऋषिः यो घर्मसूक्तद्रष्टा । तावेतौ मन्योरग्रजौ वा अनुजौ वेति न स्पष्टम् । आचार्यैस्तु - तात्पर्यनिर्णयेऽस्य मन्युसूक्तस्य भीमसेनद्रष्टृत्वं स्पष्टं प्रतिपादितम् "भीमसेनो ददर्श" इत्यादिना ॥

तथाच द्रष्टारौ द्वौ भीमसेनो तापसो मन्युश्च । न चैकस्य सूक्तस्यानेकद्रष्टृत्वमयुक्तम् ॥ ऋग्भाष्ये "सर्वेषां प्रथमो द्रष्टा" इत्यादिनाचार्यैरेवाभिधानात् ॥ तस्यैव विवरणं हयग्रीवसंहितावचने स्पष्टं यथा -

"भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यते यदि ।
ऋषिभेदस्तु तत्र स्याद्भेदो नाविष्णुनिर्गतः ॥" इति ।

## छन्दः

छन्दोविषये वक्तव्यं किञ्चित् - मन्युसूक्ते अस्मिन् द्वे छन्दसी -एका त्रिष्टुप्, अपरा जगती । श्रीमदाचार्यैः छन्दोविधानाख्यग्रन्थमुदाहृत्य भागवततात्पर्ये लोके अप्रसिद्धस्य 'जगत्' नामकछन्दसो लक्षणं - 'छन्दस्तु नवपादं यज्जगदित्युच्यते बुधैः' इति यदुक्तं तदन्यत् ॥

घर्मसूक्तेऽपि द्वे छन्दसी, त्रिष्टुप् जगती च ॥

छन्दोभिमानिनः - त्रिष्टुपो -शची । जगत्याः -वारुणी,सर्वच्छन्दोभिमानिन्यश्च । मारुत्य इत्यादि ।

## देवता

देवताविषये चायमभिसन्धिः – देवताशब्दो द्विविधः । प्रतिपाद्यवाची स्तुत्यर्वाची च ।

देवतानामानि च -अनुक्रमणिकायां कात्यायनेनोक्तानि ॥ परं तु श्रीमद्भगवत्पादैरनुक्रमणिकोक्ताः सर्वा देवता नाङ्गीकृता इति ऋग्भाष्याध्येतॄणां विदितचरमेव । तत्रैकं यथा - ''युञ्जन्ति ब्रध्नमरुषम्'' (१-६-१) इत्यत्र । अनुक्रमणिकायाम् ऐन्द्र्यादि देवता उक्ताः । अचार्यैस्तु 'मारुत्य' इत्यादि । तेनानुक्रमणिकायाः सर्वथा प्रामाण्याङ्गीकरणं दुःशकमेव ॥ एवमत्राप्यनुक्रान्तं ''यस्ते मन्यो मान्यवं तु जगदित्यादि'' इति । परन्तु श्रीमदाचार्यैः महाभारततात्पर्यनिर्णये ''यस्ते मन्यो इत्यतो नारसिंहम्''(२७/१४१) इत्यादिना सूक्तमिदं नृसिंहदेवताकमिति स्पष्टमुक्तम् ॥

तर्हि कोऽत्र प्रधानप्रतिपाद्यदेवता -? मन्युः । ननु मन्युशब्दो माध्यन्दिनसंहितायां वाजसनेये रुद्रप्रश्ने ''नमस्ते रुद्र मन्यवे'' इति, चमके -''मन्युश्च मे भामश्च मे .... यज्ञेन कल्पन्ताम्'' इति, एवं ''मन्युरसि मन्युं मे धेहि'' (३०-१४) इत्यादिषु, तथा 'यद् देवाननु व्यचलदीशानो

भूत्वाऽनुव्यचलन्मन्युमन्नादं कृत्वा मन्युनाऽन्नादेनान्नमत्ति य एवं वेद'' (वाज-१५-१४-२०) इत्यत्रापि । पुराणेष्वपि भागवते चतुर्थे (४-६-५) ''आज्ञप्त एवं कुपितेन मन्युना'' इति रुद्रे प्रयुक्तः । तथा सन्ध्यावन्दनमन्त्रेष्वपि -''सूर्यश्च मा मन्युश्च मन्युपतयश्च'' (महानारायणे -अनु-३२)इति, सन्ध्योपस्थानमन्त्रे -'मन्युरकार्षीन्नमो नमः । मन्युरकार्षीत्,मन्युः करोति नाहं करोमि,मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा'' (अनु -६३) इति, आदित्यमण्डलोपासनाविधौ --''आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः'' (अनु -१५)इत्येवम् । तथा क्वचित् ज्ञानम् -(ऋ.१-२४-६), क्वचित् कोपः (ऋ.१-२५-२) क्वचिद् बुद्धिवृत्तिः (ऋ. १-२५-४)च मन्युशब्देनोच्यत इति मन्युनानात्वं श्रूयते । अतो प्रतिपाद्यानिश्चय इति चेत्, मा भैः । तत्र,अन्यत्र,उभयत्र,अन्यत्रैवप्रसिद्धभेदेन शब्दानां चातुर्विध्यं तावद्भगवत्पादैर्निपुणतरं प्रतिपादितं सूत्रप्रस्थाने । एवञ्च मन्युशब्दो उभयत्र प्रसिद्धशब्देष्वन्यतमः । शब्दानां भगवति समन्वयप्रकारस्तुप्रकृत्य-धिकरणसुधोक्तदिशा महायोगविद्धद्रूढिभ्यामिति स्पष्टम् । वैदिकशब्दानां समन्वये ''रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत् । तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके'' इति ब्रह्मतर्कवचनोदाहरणेन विशेषमाहाचार्यः कर्मनिर्णये ॥

भगवत्पादैरेव 'आयो मन्याय मन्यवे' इतिऋङ्मन्त्रव्याख्यानावसरे कर्मनिर्णये ''मनु अवबोधने' इति धातोः 'मन्युः' इति ज्ञानी'' इति भगवति मन्युशब्दस्य यौगिकत्वं प्रतिपादितम् ॥ सहि सर्वज्ञः । 'यः सर्वज्ञः' 'ज्ञानज्ञानः' इति च श्रुतिस्मृती । तथाच मन्युरयं भगवानेव । 'शक्रान्ता देवता मताः' इत्युक्तदिशा रुद्रोऽपि । अत एव व्याख्यातृभिः मन्युशब्दस्य क्रोधाभिमानिरुद्रपरत्वं, तदन्तर्गतक्रोधनियामकभगवत्परत्वमित्येवमुभयमप्य-ङ्गीकृतम् ॥

तथाहि - 'सूर्यश्च' इत्यत्र धीरेन्द्रतीर्थीये मन्युशब्दो -''मन्युः क्रोधाभिमानी मन्युनामक-तापसमन्युगतो नृसिंहादिरूपो मन्युप्रदश्च ॥'' इत्येवं व्याख्यातः ॥ उपासनाविधावपि धीरेन्द्रीये -''मन्युः तापसो मन्युः क्रोधाभिमानी रुद्रः,तन्नियामको नृहरिश्च''इति व्याख्यातम् ॥ एवमुपस्थान-मन्त्रे ''मन्युः मन्युनामा क्रोधाभिमानी रुद्रः, तन्नियामको नृसिंहश्च'' इति व्याख्यातम् ॥

तथाच महायोगविद्वद्रूढिभ्यां विष्णौ परममुख्यवृत्तिः । अन्यत्र तु न तीरे गङ्गाशब्द इव लाक्षणिकः,अपि तु निघण्टुव्याकरणादिभिर्मुख्यवृत्तिरेव । परममुख्य-मुख्यवृत्तिभ्यां विष्णु-तदितरयोर्द्वयोरप्येवं प्रतिपत्तिर्मन्त्रेषु न विरुध्यते । तदेवं मन्युः -नरहरिः ।

क्वचिदिदं सूक्तं तन्त्रे कपाल, कृत्तिकाहस्तकरुद्रदेवता-कम् ।'कपालकृत्तिकाहस्तं तापं (रुद्रं मृत्युं)मन्युं नमाम्यहम्' इति हि तत्र पठ्यते । ब्रह्मकर्मसमुच्चयादिविनियोगविधिसङ्ग्रहग्रन्थेष्वपि रुद्रसूक्तेष्वेवास्य निवेशः । तथापि 'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः' इति स्मृतेः रुद्रशब्दवाच्यो नरसिंह एवेति न कश्चिद्विरोधः । तथाच नरहरिरत्र प्रतिपाद्यदेवता ।

बहूनि च तन्त्रशास्त्राणि मन्युसूक्तप्रतिपाद्यदेवताध्याने नारसिंहमेवास्तुवन्, चतुर्दशलोकाधिपचतुर्दशगर्गात्मकैतत्सूक्तप्रतिपाद्यनरहरिस्वरूपविषयमेवं न्यरू-रुपंश्च । अयं चतुर्दशहस्तः । द्वयोः करयोरान्त्रमाले, अन्येषु च हस्तेषु चक्रम्, शङ्खम्, खड्गम्, खेटम्, बाणम्, इषुम्, कपालम्, मुसलम्, गदाम्, अङ्कुशं च धत्ते । अपराभ्यां द्वाभ्याम् ऊरुविन्यस्तदैत्योदरकुहरं विदारयतीति ॥

तदेवं स्थिते प्रकृतव्याख्यातृभिः श्रीकृष्णावधूतैः ''वीरराघवो देवता'' इति रामदेवताकत्वमुक्तमस्य मन्युसूक्तस्य ॥

यद्यप्यापत्सु शत्रुबाधपरिहारार्थं 'नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये' इत्युक्तदिशा नरसिंह एव सर्वैरभिष्टूयते । तथापि वृद्धहारीतस्मृतौ षष्ठाध्याये रामस्याप्युक्तं शत्रुबाधादिपरिहारकत्वम् ।

तथाहि –

''सर्वापत्सु जपेन्मन्त्रं रामं ध्यात्वा महाबलम् ॥ २९१ ॥
चोराग्निशत्रुसम्बाधे तथा रोगभयेषु च ।
तोयवातग्रहादिभ्यो भयेषु च सभक्तिकम् ॥२९२ ॥
शङ्खचक्रधनुर्बाणपाणिनं सुमहाबलम् ।
सूक्ष्मणानुचरं रामं ध्यात्वा राक्षसनाशनम् ॥२९३ ॥'' इत्यादि ॥

इतिहासेऽपि,

'अग्रतो नारसिंहश्च पृष्टतो यदुनन्दनः ।
उभयोः पार्श्वयोरास्तां सशरौ रामलक्ष्मणौ ॥

इति प्रतिदिनं राममन्त्रजपस्पृणां श्रीपुरन्दरदासवर्याणां रक्षणं रामेणाकारीति श्रूयते ॥

## सन्धि-समास-स्वरादिविचारः

* पञ्चममन्त्रे तावत् 'अनवब्रवो३स्माकम्' इति कम्पस्वरः । स्वरितस्योदात्तानुदात्तसमाहाररूपस्य त्रिचतुर्मात्रकालेनोच्चरणं हि कम्पः । सोऽपि त्रिविधः । एककम्पो द्विकम्पस्त्रिकम्पश्चेति । कम्पोच्चारणक्रमस्तु व्यक्तो पाणिनीये - 'मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत्'' इति ।

कम्पस्वरस्तावत् जात्य-क्षैप्र-अभिनिहित-प्रश्लिष्टस्वरेभ्यः परतः उदात्तानुदात्तस्वरे प्रवर्तते । प्रकृते च 'अनवब्रव' इत्यत्र जात्यस्वारः ।

'सयकारं सवं वापि ह्यक्षरं स्वरितं भवेत् ।
नचोदात्तं पुरस्तस्य जात्यः स्वारस्तदुच्यते'

इति नारदीये तल्लक्षणम् ।

* अपरा चात्र सन्धिः दरीदृश्यते या यण्सन्धिरिति व्यवह्रियते लोके,वेदे 'क्षैप्य' इति 'क्षैप्र' इति वा ।

'इ-उवर्णौ यदोदात्तावापद्येते यवौ क्वचित् ।
अनुदात्ते परे नित्यं विद्यात् क्षैप्रस्य लक्षणम्'(श्लो१३२)
– इति नारदीये तल्लक्षणमुक्तम् ।

तथाहि 'अभिभूत्योजाः' 'अस्मास्वोजः' 'अस्म्युप' 'बोध्यापेः' 'मेद्येधि' इत्यादि । तत्र क्षैप्रस्वरविषये 'क्षैप्रे दीर्घः' इत्याचार्यैः भागवततात्पर्ये महाव्याकरणसूत्रमुदाहृतम् ।

* किञ्चात्र अभिनिहितस्वरोऽपि विद्यते । पूर्वरूपसन्धिरिति या वैयाकरणेषु प्रथिता सैव – 'अभिनिहितसन्धिः' इति वैदिकानाम् ।

'ए''ओ' आभ्यामुदाताभ्यामकारो निहितश्च यः ।
अकारो यत्र लुम्पेत तमभिनिहितं विदुः'
इति तल्लक्षणम् (नारदीये .श्लो १३३,, याज्ञवल्क्ये -७९)।
यथा 'यस्ते मन्योऽविधद्वज्र' इति ।

* 'उभा उपांशु' इत्यत्र 'उभौ + उपांशु' इति छेदः । 'एचोऽयवायावः'(पा.सू. ६-१-७८) इति चावादेशः । उभ् +अव् +उपांशु इति भवति । 'व्' इत्यस्य लोपे 'उभा उपांशु' इति रूपम् । अस्य 'स्वरविवृतिः' इति नाम ।

सन्ध्यक्षरोपपदे सन्धौ प्राप्तलुप्तौ यवौ यदि ।
व्यञ्जनाख्या विवृत्तिस्तु स्वराख्या प्रकृतिसंहिता ।
– (नारदीय-श्लो १८७) इति तल्लक्षणम् ॥

अत्र भुग्नसन्धिरित्याचख्यौ शौनकः प्रातिशाख्ये 'ओष्ट्ययोन्योर्भुग्नमनौष्ट्ये वकारो अत्रान्तरागमः'' (सन्धिपटले -३१ सूत्रम् )इति ।

विसर्गस्तावत् संहितायाम् 'ओ'भावं, विवृत्तिभावं,'श-ष-स'भावं,रेफम्, जिह्वामूलीयम्,उपाद्ध्मानीयभावं वा भजते ॥

(१) यत्र विसर्गः पदपाठे विसर्गान्तः संहितायामोभावं च प्राप्यते तत्र 'स्वराख्यविवृतिः' इति जानीयादिति शिक्षाकारः (नारदीये. श्लो१८८)। स्थूलाक्षरेण निर्दिष्टमुदाहरणम् **'मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः'**इत्यादि। अस्य ओभावस्य **'केलिः'** इति सञ्ज्ञा निर्दिष्टा याज्ञवल्क्येन। अस्योच्चारणे प्रयासाभावात् केलिरिति सञ्ज्ञेत्यर्थः। इयमेका ॥

(२) यत्र विसर्गः **विवृत्तिभावमापद्यते** तस्य 'विवृतिः' इति नाम। यत्र सन्धिः स्वराक्षरयोर्न दृश्यते सेत्यर्थः। चतुर्धा सा। पूर्वपदे दीर्घाक्षरा उत्तरपदे ह्रस्वाक्षरा चेकेयं ह्रस्वाग्रविवृतिः 'वत्सानुसारिणी' इत्युच्यते। मन्युसूक्ते तावत् चतुर्थमन्त्रे 'मन्यो अभिभूत्योजाः' 'मन्यो अक्रतुः' 'मन्यो अभिमातिम्''मन्यो अधिपा' इत्याद्युदाहरणम् ॥ अस्याश्चतुर्धाया विवृतेः उच्चारणे आननस्य विकटाकृतिरूपत्वात् **'विकटानना'** इति सञ्ज्ञा निर्दिष्टा याज्ञवल्क्येन।

(३) तृतीया विसर्गगतिः -शभावः। 'वरुणश्च मन्युः' इत्यत्र विसर्गः शभावं प्राप्तः। अस्या गतेः **'लीढा'** इति सञ्ज्ञा। शभावे जिह्वामध्येन तालुनि उच्चारणात् 'लीढा' आस्वादिता इत्यन्वर्थनाम।

(४) चतुर्थी-विसर्गगतिः -षभावः। अस्या गतेः **'अतिलीडा'** इति सञ्ज्ञा। अत्र जिह्वाग्रं प्रतिवेष्ट्य मूर्धन्युच्चारणात् अतिलीढेत्युच्यते।

(५) पञ्चमी विसर्गगतिः - सभावः। यथा प्रथममन्त्रे एव 'यस्ते' इति। अस्या गतेः **'विद्युत्'** इति सञ्ज्ञा। अस्योच्चारणे जिह्वाग्रभागेनोच्चार्य वेगेन दन्तेभ्यो जिह्वाविश्लेषणात् विद्युदिति नाम।

(६) षष्टी-विसर्गगतिः - रेफः । यथा 'मन्युर्होता' इति । अस्या गतेः **'शठा'** इति सञ्ज्ञा । रेफभावे प्राप्ते ऊष्मणि दन्तमूलस्थाने जिह्वायाः प्रतिवेष्ट्याग्रेणोच्चारणे काठिण्यात् 'शठा' इत्युच्यते ।

(७) सप्तमी विसर्गगतिः -उपाद्ध्मानीयम् । यथा 'ओजः पुष्यति' इति । अस्या गतेः **'पुष्पिणी'** इति सञ्ज्ञा । मुखाकृतेर्विकासितत्वात् 'पुष्पिणी' इति नाम ।

(८) अष्टमी विसर्गगतिः - जिह्वामूलीयम् । यथा घर्मसूक्ते 'निचिक्युः कवयो' इति । अस्या गतेः **'विकटा'** इति सञ्ज्ञा । ऊष्मणः हनुमूलेनोच्चारणात् मुखाकृतेर्विकटात्वं जायत इति भावः ॥

* 'हनाव **दस्यूँ रुत** बोध्यापेः' इत्यत्र दस्यून् + उत इति छेदः । अत्र नलोपेन रङ्गस्तु –

'नकारस्वरसंयुक्तश्चतुर्युक्तो विधीयते ।
रेफो रङ्गश्च लोपश्च सानुस्वारोपि वा भवेत्'
– (१७८) इति नारदीयशिक्षोक्तदिशा ज्ञेयः ।

तत्र च रङ्गे घात -निर्घात-वज्रिण-अहिण-प्रहिणभेदेन पाञ्चविध्यमाह याज्ञवल्क्यः (श्लो -७८)। प्रकृतस्य रङ्गस्य 'वज्रिणः' इति सञ्ज्ञा । इयं च स्वररेफसन्धिरित्याह शौनकः –

''हतं योनौ वचोभिर्यान् युवन् यूँन् वनिषीष्ठेति ।
ईकारोकारोपहितो रेफमेषु''
''स्वरेषु च''
''दस्यूँरेको नृँरभि च'' '
'ते स्पर्शरेफसन्धयः''
इत्यादिना (प्रातिशाख्ये -सन्धिपटले ६९-७०-७१-७२सूत्राणि )।

रङ्गप्रयोगप्रकारमाह पाणिनिः स्वशिक्षायाम् –

“यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते ।
एवं रङ्गाः प्रयोक्तव्याः खे अरा ँ इव खेदया ॥ २६ ॥

अयमेव ‘एवं रङ्गः प्रयोक्तव्यो नारदैतन्मतं मम’ इति नारदीये किञ्चिद्व्यत्ययेन पठ्यते ।

किञ्चात्र पाठकैः नकारस्थाने अनुनासिक एव उच्चार्यः नत्वनुस्वारः ।

“रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् ।
दीर्घस्वरं प्रयुञ्जीयात् पश्चान्नासिक्यमाचरेत् ॥ २७ ॥” इति ।

अनुस्वरोच्चारणे च स उच्चारणदोषः स्यादित्यपि उच्चारणदोषपटले “स्वर्शोष्मसन्धीन् स्पर्शरेफसन्धीनभिप्रायाँश्च परिपादयन्ति”(३७सूत्रम् ) इत्यनेनाकथयत् । अत एव प्रथममेव वैयाकरणैः वर्णोच्चारणे कण्ठादिस्थानानि निर्दिष्टानि । अत एव पण्डिताचार्याः आचार्यपादानां वेदोच्चारणमाहात्म्यम् - “उक्ताङ्गेभ्यः कादिकान् व्यञ्जयन्तं तत्तन्मात्राव्यञ्जनादौ प्रवीणम्” (म.वि.१२-३१); ‘वर्णसौष्ठवगरिष्ठमतूर्णं तुल्यमात्रमतिमात्र सुलक्ष्म” (म. वि.६-२)इति स्मरन्ति ।

* ‘सहावानस्मास्वोजः’ इत्यत्र ‘सहावान् + अस्मासु’ इति छेदः । अत्र ‘अस्मासु’ इत्यत्रत्यो अकारः नकारेणैकीभावं प्राप्तः । अस्य ‘रक्त’ इति नाम ।

‘नकारान्ते पदे पूर्वे स्वरे च परतः स्थिते ।
अकारं रक्तमित्याहुर्नकारेण तु रज्यते’
–(श्लो१७६) इति नारदीयशिक्षावचनम् ।

प्रातिशाख्ये तु रक्तस्य ‘अनुनासिक’सञ्ज्ञा विहिता ‘रक्तसञ्ज्ञो अनुनासिकः’ (१-३६) इति ॥

एवमेव प्रातिशाख्ये उकारस्यापि रक्तत्वमुक्तम् -'उकारश्चेतिकरणेन युक्तो रक्तोऽपृक्तो द्राघितः शाकलेन' (१-७५) इति । अत्राह -उव्वटः -''इति करणेन युक्तः' इति युक्तवचनम् इतिकरणात् परस्याप्युकारस्य दीर्घत्वं रक्तत्वं च करोति । आर्ष्यां च संहितायाम् इतिकरणायोगात् रक्तत्वं दीर्घत्वं प्रगृह्यसञ्ज्ञात्वं च न भवति'' इति । एवञ्च प्रकृते घर्मसूक्ते चतुर्थमन्त्रे -'**स उं रेह्नि मातरंम्**' इत्यत्र '**सः । ऊम् इतिं । रेह्नि**' इति पदम् ।

* '**साह्याम दासमार्यम्**' इत्यत्र 'साह्याम' इति संहिता । 'सह्याम' इति पदम् । अस्य प्लुतिसञ्ज्ञा विहिता शौनकेन । सैव प्लुतिरित्युच्यते या ह्रस्वस्य दीर्घता । 'सर्वत्र पूर्वपादान्ताः प्लवन्ते' (प्रातिशाख्ये प्लुतिपटले -१ सूत्रम् )इत्यादिना विवृतमपि । तत्रैव ५२ सूत्रे 'साह्याम' इति पदं प्लवत इत्यस्य-'साह्याम दासमार्यम्' इति मन्त्रमेषोदाजहार तद्भाष्ये उव्वटः ।

* केवलम् ऋग्वेद एव 'ड'कारस्थाने 'ळ'कारस्योच्चारणं दृश्यते । न यजुषि, नवा अथर्वे सामे वा, नवा अन्यपौरुषेयेषु डस्य ळभावः ।

''अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः ।
अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम् ॥'
– इति च स्मृतिरुदाहृता ऋग्भाष्यटिप्पण्याम् ॥

तदुक्तं महर्षिणा शौनकेन प्रातिशाख्ये प्रथमपटले -५२

''द्वयोस्तस्य स्वरयोर्मध्यमेत्य सम्पद्यते ।
स डकारो ळकारः'' इत्यादि ॥

पाणिनीये च ''प्रायः ऋक्षु डस्य ळः' इत्युक्तम् । 'अग्निमीळे' इत्यत्रापि ऋग्भाष्यटीकायामुक्तम् । यथा च ऋङ्मन्त्रे (१-१४-५) 'ईळते - स्तुवन्ति । ईडस्तुतौ,डस्य ळश्छन्दसि' इति मन्त्रार्थमञ्जरी । तदेवमस्मिन् सूक्ते द्वितीयमन्त्रे 'ईळते' 'ईळितः' इति प्रयोगौ । 'ईड स्तुतौ' इत्यस्मान्निष्पन्नं रूपमिदम् । धीरेन्द्रीयेऽपि इदं स्पष्टम् ॥

## पदपाठः

प्रथमं पदपाठस्य वक्ता शाकल्यः । शाकल्यो हि ऋग्वेदस्य शाखाप्रवर्तकेश्वन्यतमः । तथाहि ऋग्वेदस्य शाखास्तावत् चतुर्विंशतिधा इति ब्र.सू.भाष्ये स्कान्दवचनोदाहरेणेन निरूपितम् । पतञ्जलिस्तु पस्पशान्हिके 'एकविंशतिधा बाह्वृच्यम् ' इति ऋच्छाखासङ्ख्यां प्रोवाच । शाखाप्रवर्तकानां नाम चोक्तं भागवते द्वादशस्कन्धे । तथाहि - पैलः वेदव्यासमहर्षिणा ऋग्वेदमधीत्य तद्विभज्य स्वशाखां कृतवान् । एवमुत्तरत्रापि । १.पैलः, २. इन्द्रप्रमतिः, ३.बाष्कलः इत्यादयः । चरणव्यूहे पञ्चशाखानां नाम उल्लिखितम् । शाकल-बाष्कल-आश्वलायनी-शाङ्खायनी-माण्डूकायनी चेति । ब्रह्माण्डपुराणे तु शाखाप्रवर्तका अन्य एवोक्ताः ।

''शाकल्यः प्रथमस्तेषां तस्मादन्यो रथीतरः ।
बाष्कलिश्च भरद्वाज इति शाखा प्रवर्तकाः'' इति ॥

अत्रोक्तो बाष्कलिः वालखिल्यसंहितां चक्रे इति भागवते वर्ण्यते ।

तदेतेषु शाखाप्रवर्तकेषु पदपाठे विगीतिः दृश्यते । तच्च ''पदपाठेऽपि पाठभेदो शाकल-बाष्कलयोर्वर्तते । 'सासह्याम पृतन्यतः' इति १-८-४ ऋङ्मन्त्रे 'सासह्याम' इति बाष्कलानाम्, 'ससह्याम' इति शाकल्यनाम्'' इति ऋग्भाष्यछलारीये पदार्थदीपिकायामुल्लिखितम् । परस्परं वेदेष्वपि एकमेव पदं विभक्तं भवतीत्याह – दुर्गाचार्यः निरुक्तव्याख्याने 'बह्वृचानां 'मेहना' इत्येकं पदम् । छन्दोगानां त्रीण्येतानि पदानि । 'म' 'इह' 'ना' इति'' । एवं ऋग्पदपाठकर्तुः शाकल्यस्य, सामपदपाठकर्तुः गार्ग्यस्य चाभिप्रायभेदो उल्लिखितः ।

पाणिनिरपि पदपाठस्यानित्यत्वं मन्यते । ''अयमनित्यः '६-३-३०' पाणिनिसूत्रवृत्तौ पदपाठस्यानित्यत्वमाह वृत्तिकारः बालमनोरमायाम् –

'पदकाराः' 'पदकाराः' इत्यनेन पदपाठस्याधुनिकत्वं सूचितम्' इति । तदत्र पदपाठे अनुसरणीयनियमाः सङ्गृह्यन्ते ।

संहितापाठे यत्र सन्धिर्दृश्यते तत्र पदानि विच्छिन्नानि भवन्ति । 'मेहि' इति संहिता । मा -आ -इहि इति पदम् ।

यत्र विसर्गः ओभावं वा रेफं वा भजते तत्र सविसर्गान्तपद एव पदपाठे ध्येयः ।

शब्दप्रकृति-प्रत्यययोर्मध्ये अवग्रहो भवति । शब्दस्वरूपस्य 'भ्याम्' 'भिस्' 'भ्यस्' इत्येतैः प्रत्ययैर्योगे इति । तत्र 'द्वाभ्याम्' 'अष्टाभिः' 'देवेभ्यः' 'अस्मभ्यम्' 'तुभ्यम्' इत्येतान्यपवादस्थलानि ।

यत्र उपसर्गः शब्देन संयुक्तो भवति तत्र अवग्रहः उपसर्गं वियुङ्क्ते । यथा 'प्रचेतः' इत्यत्र 'प्र -चेतः ' इति ।

एकस्मिन् पदे यद्युपसर्गा अनेकास्तर्हि प्रथमोपसर्गानन्तरमवग्रहो भवति न द्वितीयाद्युपसर्गात्परतः। यथा 'सुप्रवचनम्' इत्यत्र 'सु' इत्यनन्तरमवग्रहो भवति न 'प्र'इत्यनन्तरम् ।

यत्र समासे 'द्वा' इति पदं प्रथमं तत्र 'द्वा'शब्दं नावग्रहो वियुङ्क्ते । यथा 'द्वादश' इति ।

यः शब्दः 'इव'शब्देन सह संहितायां पठ्यते तत्र पदे अवग्रहेण इवो वियुज्यते ।

'उ'कारो हि पदपाठे 'ऊम् इति' इति इतिशब्देन संयुक्तो भवति ।

एकारान्तद्विवचनमपि प्रगृह्यं भवति । तत्परतोपि इतिर्योज्यः ।

ईकारन्त-ऊकारान्तशब्दौ यदि इवशब्देन युक्तौ भवतः तत्र स शब्दो इतिकरणेन युक्तो पुनः पाठनीयः 'दम्पती इव इति दम्पती इव' इत्युदाहरणम् ।

ओकारन्तात् ,सम्बोधनान्तात् परतोपि इतिर्योज्यः ।

'होतर् ' इत्यादिशब्दानां अन्त्ये रेफस्थाने पूर्वं यदि 'ट'कारः तत्र सविसर्ग एव इति शब्दो योज्यः ।

संहितापाठे सन्धिजन्य'ष'कारः पदे 'स'कारम् , एवं सन्धिजन्य'ण'कारो 'न'कारं च पदपाठे भजतः ।

पदपाठे पदमध्येषु 'ऽ' इदं चिह्नं दृश्यते । प्रग्रह इति तन्नाम । 'अवग्रहः' इत्यपि । अयं च साधारणतः सन्धिस्थलेषु दृश्यते । सन्धिश्च पदद्वयमध्ये भविता । अवग्रहे मात्राकालं विरम्य पदोच्चार इति 'तावदवग्रहान्तरम्'(१-२७) प्रातिशाख्ये शौनकः ।। याज्ञवल्क्योपि इदमाह ।

तद्विहितं नारदीयशिक्षायां - 'समासेऽवग्रहं कुर्यात् पदं चात्रानुसंहितम्' (श्लो १६९)इति ।। एवमत्र प्रकृतमन्युसूक्तगतकतिपयशब्दानां प्रग्रहोदाहरणत्वेनोल्लेखोऽपि । यथा 'आदित्य-विप्र-जातवेदाश्च-सत्पति-गोपति-वृत्रहा-समुद्राश्च'' – (नारदीये -श्लो-१७०) इति ।।

परन्तु देवताद्वन्द्वे, नञ्समासे च नायं प्रग्रहः भवति । यथा 'इन्द्रावायू' 'अमित्रहा' इत्यादि ।

समस्तपदे प्रग्रहो भविताऽपि यत्र त्रिचतुरादिपदानां समासस्तत्र अन्त्योपान्त्यपदयोर्मध्य एव,न सर्वपदेषु ।

ई -ऊ-ए-ओकाराः प्रगृह्यसञ्ज्ञकाः । तत्र 'प्रगृह्यात् परतः इतिकरणं पदपाठे'इति याज्ञवल्क्यः ।

'इति' शब्दो यस्मात् पदात्परत अधीयते स एव पदान्तः । 'यतोऽक्षरादितिकरणं पदान्तं तस्य तं विदुः' (नारदीये -श्लो १६९)। यथा 'प्रचेत इति प्रऽचेतः' इति । अस्य 'प्रगृहीतपद' इति सञ्ज्ञा प्रातिशाख्ये

संहितापटले 'सहोदयास्ता प्रगृहीतपदाः सर्वत्रैव' (५४-सूत्रम् ) इति विहिता ॥

क्वचित् संहितायां विश्लिष्टपदानि पदपाठे यथास्थितान्येव पठ्यन्ते । विश्लिष्टपदयोर्मध्ये यः शब्दः स अनन्तरं च पठ्यते । ऋग्वेदे स्थलद्वये एवं प्रयोगो दृश्यते । यथा नरा वा शंसं' इति संहिता । सा च 'नराशंसं वा ' इति पदपाठे पठ्यते । एवं ' नरा च शंसं ' इति संहितापाठः 'नराशंसं च ' इति पदपाठे पठ्यते । प्रथमे 'वा'शब्दः, द्वितीये 'च'शब्द इत्येव विशेषः ।

## विनियोगः

ऋग्विधाने नैकधोक्तो विनियोगस्तु -परिशिष्टे प्रदत्तः ।

तत्रानुक्तस्त्वेको 'संसृष्टम्' इति मन्त्रेण एकवारं पायसहोमः सम्प्रदाये धात्रीहोमे दृश्यते । तथा हि मन्युसूक्तस्यान्तिममन्त्रस्य विनियोगः ।

परंतु भागवतानां सर्वकर्मणां विनियोगस्तु 'विष्णुप्रीतिद्वारा मोक्षे, अवान्तरे तु कर्मणि' इति मन्त्रार्थमञ्जर्युक्तदिशा ज्ञेयमित्यलम् ॥

## मन्युसूक्तम् -

मन्युदेवताकसूक्तद्वयम् अथर्वे भृग्वङ्गिरर्षिदृष्टम् 'अव ज्यामिव' इत्यादिकं दृश्यते । वनदुर्गोपनिषदि च ''यस्ते मन्यो'' इति सप्त मन्त्राणि दृश्यन्ते ॥ अथर्वेऽप्याम्नातं सूक्तद्वयं चतुर्थकाण्डे । परन्तु तत्रानुपूर्वी ऋग्वेदतो भिन्ना । ''त्वया मन्यो'' इति प्रथमं सूक्तम् । ''यस्ते मन्यो'' इति तु द्वितीयम् । ऋषिरपि ब्रह्मा स्कन्दः । अथर्वस्थसूक्तस्य विनियोगः 'मान्यवे चरुं निर्वपेत्' इति श्रूयते । बाह्वृचस्य तु 'आश्वलायनश्रौतसूत्रे ''विनत्त्यभिभूत्योरिषु-वज्रयोश्च मन्युसूक्ते' (९/८) इति विनत्त्यविभूतिनामके वज्रनामकैकाहेष्ट्या-मप्यस्य पठने विनियोगः' श्रूयते । अथर्वस्थसूक्ते क्वचित् स्वराणि पदानि च

भिन्नानि । तत्सर्वमध्येतृसौकर्यायात्रान्ते निवेशितानि । व्यत्यस्तपदानि स्वराणि च स्थूलाक्षरेण सन्दर्शितानि । मैत्रायणीसंहितायामपि मन्त्रद्वयस्य समाख्या, तैत्तिरीयब्राह्मणे त्वेकस्य लभ्यते । तत्तन्मन्त्राधस्थनटिप्पण्यां सस्वरं तद्योजितम् ॥

मन्युसूक्ते यथा मन्युदेवतायां शत्रुहनन-सोमपानादिषु प्रार्थना तथा इन्द्रेऽपि तत्प्रार्थना मैत्रायण्यां -२-२-१२ 'त्वꣳ संपत्नाम् पृतनासु जिष्णुरि न्द्राभिषाडभिमातीरपघ्नन् । पिबा सोमꣳ वज्रबाहो विषह्यास्मभ्यं पणीꣳर्वस्वाऽऽमुखाय' इति श्रूयते । महानारायणे तु 'मन्युरकार्षीत्' इत्यादिना मन्युनामक नरसिंहस्यैव स्वतन्त्रकर्तृत्वम्,अस्मदादिषु अस्वतन्त्रकर्तृत्वं चोक्त्वा पापानोदनार्थं मन्युस्तुतिः कृता ॥

मन्युसूक्तस्य तावदिदानीं द्वे व्याख्ये समुपलभ्येते । एका धीरेन्द्र-तीर्थानाम् । अपरा चेदानीं मुद्राप्यमाणा कृष्णावधूतपण्डितानाम् । एका मन्दनन्दिनी अपरा च मन्दबोधिनी ॥ यद्यपि धीरेन्द्रीये 'अभीहि मन्यो' इति मन्त्रव्याख्याने 'अन्ये तु तवस इति ..बलीयान्' इत्यप्याहुः'' इति अन्यव्याख्यानोल्लेखो दृश्यते । तेन अन्या कापि व्याख्या भवितव्येत्य-नुमीयते ।

* * *

## २ घर्मसूक्तम्

ऋग्वेदे दशमे ११४ सूक्तमिदम् । सूक्तस्यास्य द्रष्टारौ द्वौ - 'वाचा विरूप नित्यया' इति मन्त्रप्रथितविरूपपुत्रः (वैरूपः)सध्रिः, तापसपुत्रो घर्मो वा । अनुक्रान्तं च 'घर्मेति सूक्ते सध्रिस्तु घर्मो वा तापसः' इति (५५श्लो) विरूपपुत्रास्त्वन्ये केचन समुपलभ्यन्ते यथा १०-१११ सूक्तद्रष्टा अष्टादंष्ट्रः, ११२ सूक्तस्य द्रष्टा नभःप्रभेदनः, ११३ सूक्तद्रष्टा शतप्रभेदनः,। एतेषु

अग्रजानुजभावो निश्चेतुं दुःशकः । अपरोऽपि घर्मो वर्तते । यो दशमे १८१ सूक्ते द्रष्टा । स तु सौर्यः न तापसः ।

भागवते एकादशे श्रीकृष्णेनोद्धवं प्रति पूजाविधानोपदेशसमये 'स्वस्य घर्मानुवाकेन महापुरुषविद्यया' -(२७-३०) इत्यादि श्रूयते । तत्र विजयध्वजतीर्थैर्व्याख्यातमेवम् -'घर्मसूक्तेन -'घर्मा समन्तात् त्रिवृतं व्यापतुः' इति सूक्तेन'' इति ॥ तथा तन्त्रसारसङ्ग्रहे - ''तत्रात्वा हार्षसूक्तं च घर्मसूक्तं च वैष्णवम्'' इत्यादिना गर्भगृहे देवस्नापनविधावस्य विनियोग उक्तः ॥ कागलूरु आनन्दतीर्थसूनुप्रणीत स्मृतिमाणिक्यसङ्ग्रहे (११८१ )श्लोके

'ततः शुद्धोदकस्नानं कारयेत् परमात्मनः ।
पौरुषं वैष्णवं घार्मं यस्ते मन्यो समग्रकम् ॥'

इति प्रतिनित्यं देवस्नाने विनियुक्ताविमौ मन्यु-घर्मसूक्तौ इत्ययं विशेषः । श्रीमदाचार्यैरैतरेयभाष्ये नरसिंहो घर्मशब्दप्रतिपाद्य इति प्रतिपादितम् । तेन मन्युसूक्तवत् घर्मसूक्तमपि नारसिंहमित्युभयमपि वैष्णवमेव सूक्तं सम्पद्यते ।

आद्यान्तिममङ्गलाचरणपद्ये इदानीं श्रीसत्यसन्धविरचितसटीकविष्णु-स्तुतावुपलभ्येते - आद्यमङ्गलाचरणं ४४ श्लोके, अन्तिमं च ३९ श्लोके । तेनेयं व्याख्या निश्चप्रचं श्रीसत्यसन्धैरेव विरचितेति ज्ञायते । एवं समुद्रासूक्त-व्याख्यानमपि तैरेव कृतमिति तत एव 'समुद्रसूक्तव्याख्यानसमुद्रघुपतिर्हि नः' श्लो -४०) ज्ञायते । परं त्वैदम्पर्यन्तं नोपलब्धं क्वापि । आशासे महता कालेनापि यत्र कुत्रचित्तस्योपलब्धिम् ॥

अत्र मङ्गलाचरणपद्यव्याख्यानं व्याख्यातृभिरेव विष्णुस्तुतौ व्याख्यातमध्येतृसौकर्याय पद्याधस्थनटिप्पण्यां निवेशितम् । एवं सूक्तगतमन्त्राणि सर्वमूलेषु तत्र तत्र पौनःपुन्येनागतानि तत्रत्य टीका-टिप्पणीषु स्थितानि विशेषाणि च निवेशितानि ॥ घर्मसूक्तं हि -'वैश्वदेवम्' इति श्रूयते । सम्प्रति २५३ सूक्ताः वैश्वदेवीयाः उपलभ्यन्ते । तेषां समेषामपि

भगवति समन्वयः विश्वेदेवशब्दस्य भगवत्परत्वाद्युज्यते । भगवति विश्वेदेवशब्दो समन्वित आचार्यै ऋग्भाष्ये -यथा – 'एवं विश्वेदेवेषु स्थितं तन्नामानं हरिमेव स्तुत्वा ज्ञानी मोक्षमाप्नोति'' इति, छान्दोग्योपनिषद्भाष्येऽपि –

वसुरुद्रादितेयेषु विश्वेषु स्थितमीश्वरम् ।
तन्नामानं हरिं मन्त्रैर्लोकद्वारादिभिः प्रभुम् ।
प्रार्थयित्वा दिवं त्वज्ञो ज्ञो मोक्षं प्राप्नुयात् तथा'' इत्यादि ॥

## मातृकाः

1. अत्र प्रधानतयोपयुक्ता मातृका कृष्णावधूतपण्डितविरचिता मन्युसूक्तव्याख्या मन्दबोधिनी । इयं च अनन्तशयनक्षेत्रस्थप्राच्यविद्यासंशोधनालयस्था । मातृका सङ्ख्या -९४६३ । देवनागरीलिपिः । नव पत्राणि । प्रायः शुद्धा । अस्याम् अन्तिमपत्रे क्वचिद् भागः नष्टः ॥ इयमेकैव मातृका लभ्यते ॥ अस्याः लेखनकालो वा लिखितसमयो वा लिपिकारस्य वा विचारः नोल्लिखितः । अत्र शोधितपाठे यत्र निरुक्तोल्लेखः तत्र निरुक्तग्रन्थाधारतया कंसान्तर्गततया इदानीमुपलभ्यमानपाठो दत्तः ॥
2. मन्युसूक्तारोहावरोहणविधिः – महिशूरप्राच्यविद्यासंशोधनालयस्था । (मातृकासङ्ख्या -सि २९२) देवनागरीलिपिः । अस्याः मातृकायाः लेखकाः माध्वा इति निश्चीयते । यतो अत्र 'मन्युनामकमुख्यप्राणान्तर्गतश्रीलक्ष्मीनृसिंहो देवता' इति अन्तर्यामिचिन्तना दृश्यते ।
3. मन्युसूक्तपुनश्चरणविधिः -अस्मदीय-शम्याप्रासहस्तलिखितग्रन्थालयस्था मातृका । इयं च वीरनारायणाचार्यैः प्रदत्ता । पाण्डिचेरीस्थफ्रेञ्च्-इन्सिट्यूट्ग्रन्थालयस्थ 'टि-१०८५' सङ्ख्याकदेवनागरीलिपिमय्याः मातृकायाः प्रतिकृतिरूपा । अस्यां तावदनेके ग्रन्थाः निर्दिष्टाः । तत्रान्यतमं 'मुक्तितत्वम्' पूर्णप्रज्ञसंशोधनमन्दिरेणैव प्रकाशितमपि । अस्यां मातृकायां विद्यमाना विधिः महिशूर-प्राच्यविद्यासंशोधनालयस्थ 'सि २९२'मातृकातो

नातीव भिन्ना । तत्र अङ्गन्यासः 'यस्ते मन्यो' इति मन्त्रस्य । अत्र तु 'सं सृष्टम्' इति मन्त्रस्येतावानेव विशेषः । ध्यानादिकं सममुभयत्रापि । पुनश्चरणक्रमे तु 'पराजितासो अपनिलयन्ताम्' इति क्वचित् । 'शत्रवः पराजितासो अपनिलयन्ताम्' इति क्वचित् ॥

4. मन्युकल्पः- देवनागरीलिपिः ।
5. प्रयोगार्णवे मन्युसूक्तविधिः –इयमपि देवनागरीलिपिः ।
6. विनियोगदीपिका - एका देवनागरीलिपिः । अपरा नन्दिनागरी प्रायः क्रिमिसन्दष्टा ।
7. घर्मसूक्तव्याख्यानम् - शम्याप्रासग्रन्थालयस्था मातृका । इयमेकैव । प्रायः शुद्धा अपि व्यकरणसूत्रोल्लेखने लेखकप्रमादभूयिष्ठा । अस्यां यत्र यत्र टीकावाक्यान्युक्तानि तत्र टीकामूलरीत्या पाठः शोधितः ॥

**उपसंहारः**

यथा मति बहुप्रयासेन ग्रन्थद्वयमिदं सम्पादितम् । प्रकृतग्रन्थोपयोगितया-न्यान्यविषयाश्चापि योजिताः । अध्येतॄणामनुकूलनाय सायणमाधवप्रणीत-भाष्यमपि प्रथमतो योजितम् । 'अन्तेसिद्धस्तु सिद्धान्तः' इति युक्तिमल्लिको-क्तिरनुसन्धेया । कर्नाटभाषायां प्रतिपदार्थोऽपि योजितः । आङ्लभाषया सामान्यतस्तात्पर्योऽपि । मन्युसूक्ते चेदमवधेयं प्रतिपदार्थस्तावत् कृष्णावधूत-व्याख्यानानुगुणः । आङ्लभाषानुवादस्तु धीरेन्द्रीयस्येति । सम्पादनकार्येऽस्मिन् गुर्वनुग्रह एवात्र बलम् । उपलब्धैकमात्रहस्तलिखितमातृकाधारेणात्र दोषदूरीकरणे प्रयतितम् । गच्छतः स्खलनं नाविदितप्रायमिति दोषान् क्षाम्यन्तु मे हन्त मुहुर्महान्तः इति हंसक्षीरन्यायेन गुणान् ग्राहयन्तु इति च विद्वत्सु सविनयं प्रार्थये ॥

इति विद्वद्वशंवदः -

**सि.आर् .प्रदीपसिंहाचार्यः**

## प्रणतिसमर्पणम्

१. पूर्णप्रज्ञविद्यापीठे सुधान्तवेदान्तविद्योपदेशकानां गुरूणाम् अनुग्रहसन्देशेन अनुग्रहीतॄणां परमपूज्यानां श्रीपेजावरमठाधीशानां **श्रीश्रीविश्वेशतीर्थ-श्रीपादनां** साष्टाङ्गानन्तानन्तप्रणतिततिः

२. वेदत्रयोपदेशकानां अनुग्रहसन्देशेनानुग्रहीतॄणां **श्रीश्रीविश्वप्रसन्नतीर्थ-श्रीपादानां** साष्टाङ्गानन्तानन्तप्रणतिततिः

३. अध्यात्मविद्यासाधनमार्गोपदेशकानाम् अनुग्रहसन्देशेन अनुग्रहीतॄणां **श्रीश्रीविश्वनन्दनतीर्थश्रीपादानाम्** साष्टाङ्गानन्तानन्तप्रणतिततिः

४. अध्यात्मसाधनशरीरेण सह ज्ञानदात्रोः मातापित्रोः साष्टाङ्गप्रणामानि

५. विद्यापीठे मत्पोषकयोः **डि.प्रह्लादाचार्यदम्पत्योः** भूयांसि नमांसि

६. परिशोधनकर्मणि निरतानाम्,संशोधनमन्दिरनिदेशकानां, स्वीयानुभवेन मम शोधनमार्गनिर्देशकानाम्एतद्ग्रन्थप्रकाशनावकाशदातॄणां**ए.वि.नागसम्पिगे आचार्याणां** नमांसि .

## कृतज्ञतासपर्मणम्

१. कृष्णावधूतपण्डितमहोदयानां व्याख्यानमातृकाप्रतिकृतिदानेनोपकृतवद्भ्यो **त्रिवेण्ड्रं प्राच्यविद्यासंशोधनालयाधिकारितत्कार्यकारिवर्गेभ्यः**,

२. मन्युसूक्तपुनश्चरणक्रमविषये मातृकापठनार्थमुपकृतवद्भ्यो **महिशूर-प्राच्यविद्यासंशोधनालयाधिकारितत्कार्यकारिवर्गेभ्यः**,

३. **पूर्णप्रज्ञसंशोधनमन्दिरकार्यकार्यधिकारिवर्गाय एवं पूर्णप्रज्ञग्रन्थालयाधि-कारिणे श्यामाचार्याय च,**

अभवत् । मन्युरेव होता होमनिष्पादकोऽग्निः । तथा मन्युर्वरुणोऽपि जातवेदा जातप्रज्ञो वरुणश्च । सर्वेष्वपि तेजस्विषु मन्युसद्भावात् । या मानुषीर्मनुषोऽपत्यभूता विशः प्रजाः संन्ति ता मन्युमेव देवमीळते । स्तुवन्ति । हे मन्यो तपसैतन्नामकेनास्मत्पित्रा सजोषाः समानप्रीतिस्त्वं पाहि रक्ष ॥२॥

**धीरेन्द्रीया - अथ द्वितीया ऋक्[१] - मन्युरिन्द्र इति । सर्वशब्दवाच्यत्वेन मन्युनामकं श्रीनृसिंहं स्तुवन् तत्कर्तृकं पालनं समर्थयते । एवकारः सर्वत्र सम्बध्यते । मन्युरेवेन्द्रः । परमैश्वर्यशालित्वादियोगेन इन्द्रपदवाच्यः[२] । 'इन्द्रः स परमैश्वर्यात्'** इति ऋग्भाष्यवचनात् । **आस बभूव । देवः[३] क्रीडादिगुणविशिष्टत्वेन देवशब्दवाच्योऽपि मन्युरेव ।**

**"द्योतनात् विजयात् कान्त्या स्तुत्या व्यवहृतेरपि ।**
**गत्या रत्या च देवाख्यम्[४]" –** इति ऋग्भाष्यवचनात् ।

**होता होताऽपि षडिन्द्रियेषु विषयहोतृत्वाच्च होतृस्थत्वाच्च[५] होतृनामाऽपि मन्युरेव आस ।**

**"................... होतृसंस्थं विशेषतः ।**
**इन्द्रियाग्निषु चार्थानां यद्धोता होतृनामकः '** इति च ऋग्भाष्ये[६] ।

**मन्युरेव वरुणः । तपसा ज्ञानेन ज्ञानज्ञांश्च [७]आवृणोतीति, वरोन्नयनाच्च वरुणः । उक्तं च –**

**"आवृणोतीति वरुणः तपसा ज्ञानतोऽपि वा ।**
**वरमुन्नयतीत्यस्मात् वरानन्दत्वतोऽपि वा ॥'**(इति ऋग्भाष्ये)

---

१. पं -अधिका इयं पङ्क्तिः
२. पं -अधिका इयं पङ्क्तिः
३. पं -अधिकः
४. (देवः) इति भी पुस्तके ।
५. पं -अधिका इयं पङ्क्तिः
६. पं - ऋग्भाष्यात्
७. पं -' तमसा अज्ञातश्च ' इति पाठो दृश्यते ।

**वरुणशब्दवाच्यः स एवास । जातवेदाः । जातं सर्वं वेत्तीति सर्वज्ञत्वेन निमित्तेन जातवेदश्शब्दवाच्यः अपि[१] स एवास । तपसा कृच्छ्रचान्द्रायण-ध्यानादिना सजोषाः सहिता वा ससुखा वा तूर्ष्णीभूता वा । 'तूष्णीमर्थे सुखं जोषम्' इति कोशात् । याः मानुषीः मनुष्यसम्बन्धिन्यः विशः प्रजाः त्वा ईळते स्तुवन्ति । ईड स्तुतौ । 'ऋक्षु डस्य ळः प्रायेण' इत्युक्तेः डस्य ळः[२] । ताः अस्मदीयाः प्रजाः नः अस्मांश्च , पाहि रक्ष । 'पा रक्षणे' इति धातोः लोट् मध्यमपुरुषैकवचनम् । इति द्वितीयऋगर्थः[३] ॥२॥**

**व्याख्या** - अथ द्वितीया । नन्विन्द्रादीनां सत्वेऽपि कुतो रामस्य वायोर्वा प्रार्थना ? इत्यत आह - **मन्युरिति** । **मन्युरेव** राम एव,हनूमानेव वा **इन्द्रः** परमैश्वर्यादिन्द्रशब्दवाच्यः[४] **आस** । **मन्युरेव** द्योतनात्

---

१. पं -अधिकः
२. पं -अधिकौ इमौ
३. पं -अधिका इयं पङ्क्तिः
४. भगवतो इन्द्रशब्दवाच्यत्वे प्रमाणानि

(१)-''इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः ।
ददर्शेदं दीप्तिमत्वादिदं रातीति वा भवेत्'' ऋ.भा.१-२-४ ॥
(२) 'ऐश्वर्यादिन्द्र उच्यते' सू.भा.उ.ब्रह्माण्डवचनम् ।
(३)'इन्द्रः स परमैश्वर्यात्' गीतातात्पर्य .उ .वचनम् ।
(४) 'स इन्द्रः परमैश्वर्यात्' – बृ.उ.भाष्य.उ.नारायणीयवचनम् ॥
(५)-निरुक्ते - दशमे - ८ खण्डे ''इन्द्रः – इरां दृणातीति वा, इरां ददातीति वा, इरां दारयत इति वा, इरां धारयत इति वा, इन्दवे द्रवतीति वा, इन्दौ रमत इति वा, इन्धे भूतानीति वा, तद्यदेनं समैन्धत तदिन्द्रस्येन्द्रत्वं विज्ञायते, 'इदं कारणात्' इत्याग्रयणः, इदं दर्शनात्' इत्यौपमन्यवः, इन्दतेर्वा ऐश्वर्यकर्मणः, इञ्छत्रूणां दारयिता वा द्रावयिता वा, आदारयिता च यज्वनाम्'' ॥
(६) निरुक्तोदाहृतेन्द्रशब्दनिर्वचनविस्तारः मन्त्रार्थमञ्जर्यां १-१-२-४ मन्त्रे द्रष्टव्यम्
(७) वायोरिन्द्रशब्दवाच्यत्वे -'ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः सदा' – इति सामसंहिता वचनं मानम् । (छां.उ.भा.)

**देवः**[1] **आस** । **मन्युरेव** इन्द्रियाग्निष्वर्थानां हवनात् होतृनामा **आस** । **मन्युरेव** वरुणशब्दवाच्यः [2]**आस** –

‘आ वृणोतीति वरुणः तपसा ज्ञानतोऽपि वा ।
वरमुन्नयतीत्यस्माद्वरानन्दत्वतोऽपि वा’

– **(ऋग्भाष्ये १-१-२-७)**इत्युक्तेः ।

**मन्युरेव** सर्वज्ञत्वात् [3]जातवेदःशब्दवाच्य आस । तं **मन्युं याः** प्रजाः **मानुषीः** मनुष्यसम्बन्धिन्यः भरतखण्डकर्मभूमिस्थिता इति भावः । ताः **विशः** प्रजाः **ईळते** स्तुवन्ति । हे मन्यो **तपसा** अस्मत्पित्रा । ‘ज्ञानार्थं वा सुखार्थं वा तापयेद्यत्पिता तया’[4] इति स्मृतेः । **सजोषाः** सदृशप्रीतिमान् स त्वं **नः** अस्मान् **पाहि** ॥२ ॥

ಪ್ರತಿಪದಾರ್ಥ :- [೨] ಬೇರೆ ದೇವತೆಗಳಿರುವಾಗ ರಾಮದೇವರನ್ನೇ ಏಕೆ ಪ್ರಾರ್ಥಿಸಿದ್ದು ? ಎಂದರೆ ಮನ್ಯುರೇವ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ ಇಂದ್ರಃ = ಪರಮೈಶ್ವರ್ಯಶಾಲಿಗಳಾದ್ದರಿಂದ ಇಂದ್ರ ಎಂಬ ಶಬ್ದದಿಂದ ಮುಖ್ಯ ಪ್ರತಿಪಾದ್ಯನು. ಮನ್ಯುರೇವ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ **ದೇವಃ** =

---

१. देवशब्दार्थस्तु - (१) ‘‘देवो दानाद् द्योतनाद् दीपनाद्वा’’ इति **निरुक्तम्** ॥
(२) द्योतनाद्विजयात्कान्त्या स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यम्
-ऋ.भा १-१-१. ॥

२. (१)‘‘वरुणो वृणोतीति सतः’’१०-३ **निरुक्ते** ।
(२) ‘कॄ वृदारिभ्य उनन्’इति उणादि(३-३३३)सूत्रम् ।

३. (१)‘‘तद्यज्जातं जातं विन्दते तस्माज्जातवेदाः’’ (शतपथे -९-५-१-६८ )
(२)‘‘जातवेदाः कस्मात् ? जातानि वेद,जातानि वैनं विदुः, जाते जाते विद्यत इति वा, जातधनो जातविद्यो वा, जातप्रज्ञानो यत्तज्जातः पशूनविन्दत इति तज्जातवेदसो जातवेदस्त्वम्’’ इति **निरुक्ते सप्तमाध्याये पञ्चमपादे १९ खण्डे** ॥
(३) ‘‘जातं सर्वं वेत्तीति,जातानि वेदानि वृत्तिज्ञानानि यस्मादिति वा जातवेदाः -अग्न्यन्तर्गतो भगवान् - इति **म.ना.उ.व्याख्याने** -(अनु- २-१) ॥

४. मातृकायामस्पष्टम् ।

ಪ್ರಕಾಶಸ್ವರೂಪನಾದ್ದರಿಂದ ದೇವ ಎಂಬ ಶಬ್ದದಿಂದ ವಾಚ್ಯನು ಆಸ = ಆಗಿದ್ದಾನೆ. ಮನ್ಯುರೇವ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಹೋತಾ = ಇಂದ್ರಿಯ ಎಂಬ ಅಗ್ನಿಯಲ್ಲಿ ವಿಷಯ ಎಂಬ ಪದಾರ್ಥಗಳನ್ನು ಹೋಮಿಸುವುದರಿಂದ ಹೋತಾ ಎಂಬ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯನು ಆಸ = ಆಗಿದ್ದಾನೆ. ಮನ್ಯುರೇವ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ವರುಣಃ = ವರುಣ ಎಂಬ ಶಬ್ದದಿಂದ ವಾಚ್ಯನು ಆಗಿದ್ದಾನೆ. ಮನ್ಯುರೇವ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ ಜಾತವೇದಾಃ = ಸರ್ವಜ್ಞರಾದ್ದರಿಂದ ಜಾತವೇದ ಎಂಬ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ . ಇಂತಹ ಮನ್ಯುಮ್ = ಮನ್ಯುನಾಮಕ ರಾಮನನ್ನು ಯಾಃ = ಯಾವ ಮಾನುಷೀಃ = ಮನುಷ್ಯ ಸಂಬಂಧಿ ಯಾದ ಭರತಖಂಡದ ಕರ್ಮಭೂಮಿಯಲ್ಲಿರುವ ವಿಶಃ = ರಾಮನ ರಾಜ್ಯದಲ್ಲಿರುವ ಪ್ರಜೆಗಳು, ಈಳತೇ = ಸ್ತೋತ್ರ ಮಾಡುತ್ತಾರೋ, ಅಂತಹ , ಹೇ ಮನ್ಯೋ = ಎಲೈ ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ , ತಪಸಾ = ನಮ್ಮ ತಂದೆಯಾದ ತಪಸ ಋಷಿಗಳಿಂದ ಸಜೋಷಾಃ = ಸದೃಶವಾದ ಪ್ರೀತಿಯುಳ್ಳ ನೀನು ನಃ = ನಮ್ಮನ್ನು ಪಾಹಿ = ರಕ್ಷಿಸು.

2. Oh! Lakshmee Narasimha, of the name of Manyu, you are the Lord of all riches. You are called primarily 'Indra'. You are also called 'Deva' as anything you do is clearly the expression of your joy. You are the brightest. You are the embodiment of all-auspicious attributes and of success. You look after all the activities of the universe, and You are the one who have provided the sensory organs like eyes, ears, nose, tongue and touch to animate objects to experience various sensations through them. That's why you are called Hota-- thereby meaning, offering worldly experience in the Sacrificial fire.

**संहिता -** **अ॒भीहि मन्यो त॒वस॒स्तवीया॑न्**
**तपं॑सा यु॒जा वि जंहि॒ शत्रू॑न् ।**

**अमित्रहा वृंत्रहा दंस्युहा च**
**विश्वा वसून्या भंरा त्वं नंः ॥३॥**

पदपाठः - **अभि । इहि । मन्यो इतिं । तवसंः । तवींयान् । तपंसा । युजा । वि । जहि । शत्रूंन् । अमित्रऽहा । वृत्रऽहा । दस्युऽहा । च । विश्वां । वसूंनि । आ । भर । त्वम् । नः ॥३॥ (विंशतिपदानि)**

सायणभाष्यम् - ३ - हे मन्यो त्वमभीहि । अभिगच्छास्मद्यज्ञम् । कीदृशस्त्वम् । तवसो बलवतोऽपि तवीयानत्यन्तं बलवान् । स त्वं तपसा अस्मत्पित्रा युजा सहायेन शत्रून् वि जहि । किञ्चामित्रहा अमित्राणां हन्ता । अमित्रोऽस्निग्धः । तथा वृत्रहा आवरकाणां शत्रूणां हन्ता तथा दस्युहा च । दस्युरुपक्षयकारी शत्रुः । तादृश मन्युदेव त्वं विश्वा सर्वाणि वसूनि धनानि नोऽस्मभ्यमा भर । आहर ॥३॥

**धीरेन्द्रीया - अथ तृतीया ऋक् - अभीहि मन्यो इति । पूर्वऋग्द्वयेन संरक्षणं[१] शत्रुनिवारणं च प्रार्थयित्वा (प्रार्थ्य) इदानीं शत्रुहननपूर्वकं स्वस्य (स्वरक्षणं)[२] धनप्राप्तिं च प्रार्थयते ।**

**हे मन्यो । त्वं तवसः तवीयान् । सर्वतोऽभिवृद्धादभिवृद्धः ॥**

**[३]" 'तव' इति सौत्रो धातुः वृद्ध्यर्थः । तस्मात् मत्वर्थे अच्प्रत्ययः " इति नमकभाष्ये विद्यारण्योक्तेः तवस इति रूपम् । तस्मादेव मत्वर्थे असुन्प्रत्यये तवीयान् वृद्धिमान् पूर्ण इति यावत् ॥**

---

१. पं -स्वरक्षणं
२. पं -अधिकः
३. इत आरभ्य पङ्क्तित्रयं पं -नास्ति ।

**अन्ये तु " 'तवसः' इति निर्धारणे षष्ठीमङ्गीकृत्य बलवतां मध्ये तवीयान्अत्यन्तबलीयान् " इत्यप्याहुः ॥**

**अभीहि अस्मदाभिमुख्येन आगच्छ । तपसा युजा तपोयुक्तेन । पूर्वस्मात् 'सहसा' इत्यनुवर्तते । सहसा बलेन शत्रून् विजहि । यद्वा तपसा आलोचनया युजा समाधिना च । ' युज समाधौ' इति धातुव्याख्यानात् । विजहि संहर । 'हन हिंसागत्योः' इति धातु(व्याख्यानात्): । [1]शत्रुहननसामर्थ्यं कथम् ? इत्यत आह – अमित्रेति । अमित्रहा अमित्रान् शत्रून् हिरण्यकशिप्वादीन् हन्तीति अमित्रहा । शत्रुहनने समर्थ इति यावत् । वृत्रहा वृत्रघ्नः । इन्द्रान्तर्गतरूपेणवृत्रहननादिसामर्थ्यवान् ।**

**यद्वा वृत्राणामावरकाणां पापानां हन्ता । ' वृञ् वरणे' इति धातोः । दस्युहा गूडद्वेषिणो चोरान् हन्तीति दस्युहा सन् नः विश्वा विश्वानि समस्तानि वसूनि धनानि आभर पूरय । 'भृञ् भरणे' (इति धातोः) रक्षेति वा अर्थः । 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' इति कोशात् । इति तृतीयऋगर्थः[2] ॥ ३ ॥**

**व्याख्या** - अथ तृतीया **हे मन्यो तवसः** बलवतः [3] । निर्धारणे षष्ठी । **तवीयान्** बलवान् **अमित्रहा** शत्रुहन्ता **वृत्रहा** अज्ञानाद्यावरकहन्ता **दस्युहा** सदुपक्षयकारिणां हन्ता **त्वम् अभि** मां प्रति **आ इहि** एहि आगच्छ । आगत्य च **युजा** समाधियुक्तेन । 'युज समाधौ' इत्यस्मात् क्विप् । **तपसा** त्वदाराधनरूपेण तपसा **शत्रून् वि** विशेषेण **जहि** संहर । 'किश्व' इति चार्थः । **विश्वा** समस्तानि **वसूनि** हिरण्यानि **नः** अस्माकम्

---

१. पं - इत आरभ्य पङ्क्तिद्वयं नास्ति

२. पं -अधिका इयं पङ्क्तिः

३. 'तविषी इति बलनाम, तवतेर्वृद्धिकर्मणः' इति निरुक्ते -९-२५; वेदनिघण्टौ -२-९

अस्मभ्यं वा **आ भर**[१] पूरय । आहर[२] इति वा । 'भर' इति संहितायां दीर्घः । 'आ' इत्यावर्तनम् ॥३॥

ಪ್ರತಿಪದಾರ್ಥ :-( ೩) ಹೇ ಮನ್ಯೋ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ ತವಸಃ = ಬಲಿಷ್ಠರಿಗೆ, ತವೀಯಾನ್ = ಬಲಿಷ್ಠರಾದ , ಅಮಿತ್ರಹಾ = ಶತ್ರುಗಳನ್ನು ಸಂಹರಿಸುವ , ವೃತ್ರಹಾ = ಅಜ್ಞಾನಾದಿ ಆವರಣಗಳನ್ನು ನಾಶಮಾಡುವ , ದಸ್ಯುಹಾ = ಸಜ್ಜನರನ್ನು ಹಿಂಸಿಸುವರನ್ನು ಸಂಹರಿಸುವ ತ್ವಮ್ = ನೀನು, ಅಭಿ = ನನ್ನನ್ನು ಕುರಿತು [ನನ್ನ ಅಭಿಮುಖವಾಗಿ] [ಏಹಿ =] ಆ ಇಹಿ = ಬಾ. ಬಂದು ಯುಜಾ = ಸಮಾಧಿಯೋಗದಿಂದ ಕೂಡಿದ, ತಪಸಾ = ನಿನ್ನ ಆರಾಧನೆರೂಪವಾದ ತಪಸ್ಸಿನಿಂದ, ಶತ್ರೂನ್ = ಶತ್ರುಗಳನ್ನು, ವಿ = ವಿಶೇಷವಾಗಿ, ಜಹಿ = ಸಂಹರಿಸು . ಚ = ಮತ್ತು, ವಿಶ್ವಾ = ಎಲ್ಲಾ ವಸೂನಿ = ಬಂಗಾರವನ್ನು, ನಃ = ನಮಗೋಸ್ಕರ, ಆ ಭರ = ತಂದುಕೊಡು.

3. In the last two Riks God's grace was solicited for the total protection of devotees and for the destruction of enemies. Now the devotee begs for real riches after the destruction of the enemies.

Oh! Lord Lakshmee Narasimha. It is certain that You are the most powerful. You are total and perfect; You are Full and Perfect, You are Complete, You are the God of gods. Cast your compassionate looks on us, and help us. Destroy our enemies. You are the embodiment of strength and Your knowledge is perfect. You have earlier destroyed all enemies just by willing it, and Your plans are perfect. Dwelling in Indra with Your special presence, You killed Vrittasura. We

---

१. 'भर' इत्यत्र भृञः शब्विकरणं छान्दसम्''( **मन्त्रार्थमञ्जरी** - 'एमाशुमाशवे भर' (ऋ -१-४-७)इत्यत्र ॥

२. 'हृग्रहोऽर्थश्छन्दसि' (पा.सू.)इति हस्य भः । द्र०-**ऋग्भाष्ये** -'आ भर' इत्यस्य 'आहर'इति व्याख्या १-८-१

pray You to dwell in us and destroy all our sins. We beg you to overcome all the hurdles standing in our path by destroying all our enemies. Yours is the total knowledge and power. With faith in our hearts, we submit ourselves to You completely. because Destroy all our enemies and convey all their riches to us Make us naturally complete and ever protect us.

संहिता - **त्वं हि मंन्यो अभिभूंत्योजाः**
**स्वयंभूर्भामों अभिमातिषाहः ।**
**विश्वचंर्षणिः सहुंरिः सहांवा**
**नस्मास्वोजः पृतंनासु धेहि ॥४॥**[१]

**पदपाठः - त्वम् । हि । मन्यो इतिं । अभिभूंतिऽओजाः ।**
**स्वयंऽभूः । भामः । अभिमातिऽसहः**[२] **। विश्वऽ-**
**चर्षणिः । सहुंरिः । सहांवान् । अस्मासु । ओजः ।**
**पृतंनासु । धेहि ॥४॥ (चतुर्दशपदानि)**

**सायणभाष्यम्** - ४ हे मन्यो त्वमभिभूत्योजाः परेषामभिभावुकबलः स्वयंभूः स्वयमेवोत्पन्नो भामः क्रुद्धोऽभिमातिषाहः । अभितो हिंसन्तीत्यभिमातयः शत्रवः । तेषामभिभविता । विश्वचर्षणिः सर्वेषां द्रष्टा सहुरिः सहनशीलः सहवान् सहनवान् ईदृशस्त्वमस्मासु पृतनासु सङ्ग्रामेष्वोजो बलं धेहि । देहि ॥ ४ ॥

---

१. ''त्वं'ऽ हिं मन्यो अभिभूत्योजाः स्वयंजों भामो अभिमाति षाहः ।
विश्वंचर्षणिः सहुरिः संहावान्सं हूयमानो अमृताय गच्छत् ॥''
इति मैत्रायणीसंहितायाम् ४-१२-८०समाख्या ऋक्

२. 'अभिमातिषाहः -षह अभिभवे । 'छन्दसि सहः' इति ण्विप्रत्ययः । सुषुमादित्वाद् षत्वम् ॥ अभितः हिंसतीत्यभिमातयः । तेषामभिभविता ॥

**धीरेन्द्रीया - अथ चतुर्थी ऋक्[१]– त्वं हीति ॥ अत्रापि मन्यु-नामकश्रीनृसिंहप्रार्थना क्रियते ।**

**हे मन्यो अभिभूत्योजाः पराभिभवकार्योजःशाली । अभिभूतिकृत् ओजो यस्येति उत्तरपदलोपिसमासः । स्वयम्भूः स्वयमेव भवति अभिव्यज्यत इति स्वयम्भूः[२] । स्वेच्छयैव नृसिंहरूपेण स्तम्भादभिव्यक्त इत्यर्थः । भामः अभिव्यक्तज्ञानरूपः । ' भा दीप्तौ' 'माङ् माने' इति धातोः औणादिको डप्रत्ययः । अभिमातिषाहः[३] अभिमातिं शत्रुं सहते मर्षते इति । 'षह मर्षणे' इति धातोः औणादिको डप्रत्ययः । विश्वचर्षणिः[४] विश्वं समस्तं जगत् चर्षणिः प्रजाः यस्य स तथोक्तः । 'प्रजाश्चर्षणयः स्मृताः' इति वचनात् । सर्वज्ञः । सहुरिः सहनशीलः[५] । सहावान् बलवान्, मार्गशीर्षप्रियो वा । 'मासानां मार्गशीर्षोऽहम्' इत्युक्तेः । एतादृशस्त्वम् अस्मान् अस्मत्सम्बन्धिषु पृतनासु सेनासु । ओजः प्रभावं कान्तिं च देहे आधत्स्व । 'डुधाञ् धारणपोषणयोः' लोट् ॥ ४ ॥**

**व्याख्या-** अथ चतुर्थी । हे **मन्यो त्वं हि** यस्मात् **अभिभूत्योजाः** शत्रभिभवे उक्तबलवान् । **स्वयम्भूः**[६] 'सर्वतो वरः'[७] । (विश्वचर्षणिः)

---

१. पं -अधिका इयं पङ्क्तिः
२. पं -अधिका इयं पङ्क्तिः
३. पं अत्र 'अस्मदभिमतिं सहते । अस्मदभिमतकारीति भावः' इति वाक्यं दृश्यते ।
४. पं - इतः परं 'सर्वज्ञ' इत्यन्तं वाक्यद्वयमधिकम् ।
५. पं - नास्ति
६. (१)'स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः सदा अनन्याश्रयः' ईशावास्यटीका ।
(२)'स्वयमेव भवतीति स्वयम्भूः स्वतन्त्रः परमेश्वरः'' – तत्वोद्योतटीका
७. मातृकायां 'सर्वतो वरः' इत्येवन्मात्रं दृश्यते । 'सर्वतो वरः' इत्यर्थस्तु 'परिभूः' इत्यस्य । न स्वयम्भुशब्दस्य । तेनात्र 'वरः' इत्यतः परं ''सदानन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः' इति ईशावास्यभाष्योक्तवाराहवचनमनुमीयते ॥

विश्वाः चर्षणयः[१] प्रजाः पाल्यत्वेन यस्य स तथा । **सहुरिः** भक्तापराधसहनशीलः । **सहावान्** तेजस्वी । दैर्घ्यमाधिक्यार्थे । **भामः** क्रुद्धः[२] । अभिमातीन् शत्रून् सहते अभिभवतीति तथा । शत्रुकर्तृकप्रजाहननं विषतुल्यमिति द्योतयितुं षत्वं दीर्घत्वं च । 'शत्रुभिः स्वहननं तिषाभमिति षाहरम्'[३] इति निरुक्तिकारः । तस्मात् **अस्मासु** अस्मत्सम्बन्धिषु **पृतनासु** सेनासु सैन्यरूपेन्द्रियादिषु वा । **ओजः** बलं **धेहि** [४] देहि । निधेहि इति वा । सर्वत्र प्रग्रहस्तु उक्तार्थे दार्ढ्यायेति ज्ञेयम् ॥४॥

ಪ್ರತಿಪದಾರ್ಥ :-(೪) ಹೇ ಮನ್ಯೋ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ತ್ವಮ್ = ನೀನು, ಹಿ = ಯಾವ ಕಾರಣದಿಂದ ಅಭಿಭೂತ್ಯೋಜಾಃ = ಶತ್ರುಗಳನ್ನು ಸೋಲಿಸುವ ವಿಷಯದಲ್ಲಿ ಬಲಿಷ್ಠವಾದದನ್ನು, ಸ್ವಯಂಭೂಃ = ಸ್ವತಂತ್ರನಾದವನೋ ವಿಶ್ವಚರ್ಷಣಿಃ = ಎಲ್ಲ ಪ್ರಜೆಗಳನ್ನು ರಕ್ಷಣೆ ಮಾಡುವವನೋ, ಸಹುರಿಃ = ಭಕ್ತರ ಅಪರಾಧವನ್ನು ಸಹನೆ ಮಾಡಿಕೊಳ್ಳುವವನೋ, ಸಹಾವಾನ್ = ತೇಜಸ್ವಿಯೋ, ಭಾಮಃ = ಶತ್ರುಗಳಲ್ಲಿ ಕೋಪವುಳ್ಳವನೋ, ಅಭಿಮಾತಿಷಾಹಃ = ಶತ್ರುಗಳನ್ನು ಯುದ್ಧದಲ್ಲಿ ತಿರಸ್ಕರಿಸುವವನೋ ಆ ಕಾರಣದಿಂದ ಅಸ್ಮಾಸು = ನಮ್ಮ ಸಂಬಂಧಿಯಾದ, ಪೃತನಾಸು = ಸೈನ್ಯದಲ್ಲಿ, ಸೈನ್ಯರೂಪವಾದ ಇಂದ್ರಿಯಗಳಲ್ಲಿ, ಓಜಃ = ಬಲವನ್ನು, ಧೇಹಿ = ಕೊಡು.

4. Oh! Lord Lakshmee Narasimha, Your look is enough to

---

१. '....चर्षणयः' इति पञ्चविंशति मनुष्यनामानि **वैदिकनिघण्टुः** (२-३) 'कृषेरादेश्च चः' इति (उणादि २-२६१) सूत्रेण कृष 'विलेखने' इत्यस्मात् चर्षणिरूपनिष्पत्तिः ॥

२. ''हेळः । हरः । घृणिः । त्यजः । भामः । एहः । ह्वरः । तपुषी । जूर्णिः । मन्युः । व्यथिरित्येकादश क्रोधनामानि -२-१३ **वैदिकनिघण्टुः**

३. निरुक्तग्रन्थे अनुपलब्धः अयं भागः

४. 'विश्वायुर्धेह्यक्षितिम्' १-९-७ इति **ऋङ्मन्त्रटिप्पण्यां** -'धेहि देहि' -- 'डु दाञ् दाने' इत्यतो लोटि सिपि शपः श्लौ द्वित्वादौ ''ध्वसोरेत्वाभ्यासलोपश्च' इत्येत्वाभ्यासलोपयोः वर्णव्यत्ययेन दकारस्य धकारः'' ॥ - **श्रीनिवासतीर्थाः**

confuse Thy enemies. By Your own will You appeared to sight by bursting through the diamond-hard pillar in the palace of Hiranyakasipu. By Your own will do You manifest Your self on this earth. Your knowledge expresses itself in Your form. You are the destroyer of all. You are the very embodiment of patience and tolerance. You are the most powerful. You love the month of Marghaseersha of all months.

संहिता - **अभागः सन्नप परेतो अस्मि**
**तव क्रत्वा तविषस्य प्रचेतः ।**
**तं त्वा मन्यो अक्रतुर्जिहीळाहं**
**स्वा तनूर्बलदेयाय मेहि ॥५॥**

**पदपाठः – अभागः । सन् । अप । पराऽइतः । अस्मि । तव । क्रत्वा । तविषस्य । प्रचेत इति प्रऽचेतः । तं । त्वा । मन्यो इति । अक्रतुः । जिहीळ । अहं । स्वा । तनूः । बलऽदेयाय । मा । आ । इहि** [१]**॥५॥** एकविंशतिपदानि

सायणभाष्यम् - ५ हे प्रचेतः प्रकृष्टज्ञान मन्यो तविषस्य महतस्तव क्रत्वा कर्मणा भागो भागरहितः सन् । त्वां यज्ञेऽयाजकः सन्नित्यर्थः । त्वदनुकूलरहितोऽहमप परेतोऽस्मि । युद्धे शत्रुभिरभिभूतः सन् दूरं गतोऽस्मि । तं तादृशं भागरहितं त्वा त्वां हे मन्यो अक्रतुः कर्मरहितोऽहं जिहीळ । क्रुद्धं कृतवानित्यर्थः । यद्वा । अहमेव त्वत्सहायमेव क्रोधितवान् । अथेदानीं स्वा तनूर्मम शरीरभूतस्त्वं बलदेयाय बलदानाय मेहि । मां प्राप्नुहि ॥ ५ ॥

---

१. 'मेहि' इति संहिता । मा,आ,इहि इति च्छेदः । 'ओमाङोश्च' इति पररूपम् । १-९-१ 'इन्द्रेहि' इत्यत्रैवमेव व्यवस्था मन्त्रार्थमञ्जर्यां दृश्यते ।

**धीरेन्द्रीया - अथ पञ्चमी ऋक्[१] - अभागः सन्निति ॥ तविषस्य अभिवृद्धस्य, बलवतो वा । 'अप' इत्यस्य 'क्रत्वा ' इत्यनेन 'व्यवहिताः छन्दसि' (पा.सू.१-४-८२) इति शास्त्रात् [२] सम्बन्धः । तव अपकृत्वा अपकारं कृत्वा । क्रत्वेत्यस्य कृत्वेत्यर्थः [३]। अभागः सन् प्राप्तव्यभागहीनः सन् परेतः मृतप्रायः अस्मि अभवम् । हे प्रचेतः प्रकृष्टं चेतः ज्ञानं यस्य सः तस्य सम्बुद्धिः हे प्रचेतः । ' चेती सं(वि) ज्ञाने' । प्रकृष्टज्ञान प्रकृष्ट-मनस्केति वा । ' चित्तं तु चेतो हृदयम् ' इति कोशः[४] । तं पूर्वोक्तमहिमोपेतं ज्ञात्वा[५] त्वा त्वाम् । अक्रतुः त्वद्यजनहीनः, (त्यागजपहीनः[६]) ज्ञानहीनो वा । 'स क्रतुर्ज्ञानरूपत्वात्' इति ऋग्भाष्योक्तेः । अहं जिहीळ त्यक्तवान् । 'ओहाक् त्यागे' । तथापि अहं स्वातनूः तव शरीरभूतः त्वन्नियम्यश्च । 'यस्यात्मा शरीरं','य आत्मानमन्तरो यमयति' इति श्रुतेः । अतः बलदेयाय बलप्रदानाय[७] मा एहि ( मा मा प्रति एहि आगच्छ । 'ईर गतौ' विशेषाकारेण मयि बलप्रदानाय)मां प्राप्नुहि । मयि सन्निधत्स्वेति भावः ॥५॥**

**व्याख्या-** अथ पञ्चमी । (**प्रचेतः**) प्रकृष्टं चेतो ज्ञानं यस्य तत्सम्बुद्धौ तथा । **हे मन्यो** 'त्वाम्' इत्यावृत्तिः । त्वाम् **अप** वर्जयित्वा कृतया **क्रत्वा** यज्ञादिसत्कर्मणा **तविषस्य**[८] महतः **तव** तुभ्यम् **अहम् अभागः सन्** अदत्तभागः सन्,**परैः** बाह्याभ्यन्तरशत्रुभिः **इतः** आक्रान्तः **अस्मि** । **अक्रतुः** त्वद्विषयकर्माकर्ता **अहं तं** तादृशं महान्तं **त्वा** त्वाम् **जिहील** क्रुद्धं कृतवान् । **स्वातनूः** स्वस्य भक्तस्य आतनूः सम्यग्विस्तारकर्ता । भक्तपोषक

---

१. पं - नास्ति २. पं - अधिकम् ३. पं - नास्ति
४. पं-(कोशात् ) ५. पं - अधिकम्
६. पं -पाठान्तरम् ७. पं -इतः परं "मा मा ...प्रदानाय" इत्यधिकम्
८. वैदिकनिघण्टौ ३-३ "पञ्चविंशतिः महन्नामानि" इत्यत्र पठितम् ।

इति यावत् । 'त्वम्' इति शेषः । **बलदेयाय** बलदानाय **मा** माम् **आ इहि** एहि प्राप्नुहि । त्वद्विषयकोपासना मया न कृता । तथापि त्वं भक्तरक्षकत्वादिदानीं प्रार्थयन्तं मां बलदानेन रक्षेति भावः ॥५॥

ಪ್ರತಿಪದಾರ್ಥ :-(೫) ಪ್ರಚೇತಃ = ಪ್ರಕೃಷ್ಟವಾದ ಜ್ಞಾನವುಳ್ಳ, ಹೇ ಮನ್ಯೋ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ತ್ವಾಮ್ = ನಿನ್ನನ್ನು, ಅಪ = ಬಿಟ್ಟು ಮಾಡಿದ ಕ್ರತ್ವಾ = ಯಜ್ಞ ಮುಂತಾದ ಸತ್ಕಾರ್ಯದಿಂದ ತವಿಷಸ್ಯ = ಪೂಜ್ಯನಾದ ತವ = ನಿನಗೆ ಅಹಮ್ =ನಾನು ಅಭಾಗಃ ಸನ್ = ಹವಿರ್ಭಾಗವನ್ನು ಕೊಡದೇ ಪರೇತಃ = ಶತ್ರುಗಳ ಆಕ್ರಮಣಕ್ಕೊಳಪಟ್ಟವನು ಅಸ್ಮಿ = ಆಗಿದ್ದೇನೆ. ಅಕ್ರತುಃ =ನಿನ್ನನ್ನು ಉದ್ದೇಶಿಸಿಕೊಂಡಿರದಿರುವ ಕಾರ್ಯಗಳನ್ನು ಮಾಡಿದ, ಅಹಮ್ = ನಾನು, ತಮ್ = ಅಂತಹ ಮಹಾತ್ಮನಾದ, ತ್ವಾಮ್ = ನಿನ್ನನ್ನು, ಜಿಹೀಲ =ಕೋಪಯುಕ್ತ-ನನ್ನಾಗಿ ಮಾಡಿದ್ದೇನೆ. ಆದರೂ ಸ್ವಾತನೂಃ = ನಿನ್ನ ಭಕ್ತರಿಗೆ ನಿನ್ನ ಸ್ವರೂಪವನ್ನು ತೋರಿಸಿಕೊಡುವ, ತ್ವಮ್ = ನೀನು, ಬಲದೇಯಾಯ = ಬಲವನ್ನು ಕೊಡಲೋಸುಗ, ಮಾಮ್ = ನನ್ನನ್ನು ಕುರಿತು, ಏಹಿ = ಬಾ ॥ ೫ ॥

5. Oh! Lord Narasimha, You are the very embodiment of strength, power, and progress. You are the Supreme with all propitious attributes. One who does not know your attributes is indeed a moron.

Not knowing this truth, I have been deprived of all richness and happiness that I am eligible for, and I am almost a dead-waste. You are the very embodiment of perfect knowledge and power. There is no one who is Your equal, leave alone Your better. Oh! Lord, being ignorant, I did not offer due worship.

I worship and submit myself to You most dutifully and faithfully to acquire right knowledge about You.. I failed miserably. Oh Lord, now that I have a body resembling

Yours to a slight extent, I submit myself to You as a slave with love. I am controlled by You. Stay in me with Your special presence to bless me with Your.

संहिता - **अयं तें अस्म्युप मे ह्यर्वाङ्**
**प्रतीचीनः सहुरे विश्वधा यः ।**
**मन्यों वज्रिन्नभि मा मा ववृत्स्व**
**हनांव दस्यूँ॥ रुत बोंध्यापेः ॥६॥**

**पदपाठः – अयं । ते । अस्मि । उपं । मा । आ । इहि । अर्वाङ् ।**
**प्रतीचीनः । सहु रे । विश्वऽधायः । मन्यो इतिं । व**
**ज्रिन् । अभि । माम् । आ । ववृत्स्व । हनांव ।**
**दस्यून् । उत । बोधि । आपेः ॥ ६॥ (२२पदानि)**

**सायणभाष्यम्** - ६ - हे सहुरे शत्रूणां सहनशील विश्वधायो विश्वस्य धर्तर्मन्यो अयं जनोऽहं ते तवास्मि कर्मकृत् । यत एवमतः प्रतीचीनः प्रतिगन्ता अर्वाङ् अस्मदभिमुखं मा मामुपेहि । उपागच्छ । हे मन्यो वज्रिन् मामभ्या ववृत्स्व । अभ्यावर्तस्व । किमर्थमभ्यागमनमिति चेत् - उच्यते । हनावावां दस्यून् शत्रून् । उतापिचापेर्बन्धुं बोधि । बुध्यस्व ॥ ६ ॥

**धीरेन्द्रीया – अथ षष्ठी ऋक्[१] । अयं ते इति ॥ हे मन्यो सहुरे 'हुरि' इतिशब्दायमान[२] हे वज्रिन् वज्रायुधधारक, सर्वानिष्टवर्जनशीलेति वा । 'वर्जनाद् वज्र उच्यते' इति स्मृतेः । अयमहं ते त्वदीयोऽस्मि । मा माम् उप समीपम् एहि प्राप्नुहि । सर्वाधार(क)स्त्वमित्याह – अर्वाङ् इति । अर्वाक्[३] अधस्तात् यः विश्वधाः समस्तप्रपञ्चधारणपोषणकर्ता प्रतीचीनः**

---

१. पं - अधिकम् २. पं - नास्ति ३. पं - अर्वाङ्

**पश्चादपि विश्वधाः अतः त्वम् अभि अभितः मा माम् आववृत्स्व । आवृत्य तिष्ठ । ''नैनेन किञ्चनानावृतम्'' इति श्रुतेः ॥**

**यद्वा आ ववृत्स्व भक्तत्वेन वृणीष्व । 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः । उत अपिच दस्यून् शत्रून् अभि हनाव । आवाम् अभिहननं कुर्वः । अतः आपेः प्राप्तान् । 'शत्रून् ' इत्यावर्तते । बोधि, मां बोधय इति ॥६**

**व्याख्या-** अथ षष्ठी । **सहुरे** भक्तापराधसहनशील **विश्वस्य** जगतः **धा प्रवर्तक यः** वर्तः[१] । सान्तं पदम् । **वज्रिन्** भीतिवशाच्छत्रुभिः परित्यक्त[२] । 'वृजी वर्जने'इत्यस्मात् 'गमेरिन्' इतीनि प्राप्ते 'उणादयो बहुलम्' (३/३/१)इति बहुलग्रहणाद् वृजेरपि कृते अनुबन्धार्थके कारकगतव्रजेरिन्प्रत्यये, पुगन्तगुणे रपरत्वे,रेफस्य [३] निरुक्ताज्जकारात्परत्वे वज् +र् + इन् = वज्रिन् इति रूपं सिद्धम् [४]। **हे मन्यो अयम्** अहं **ते** तव सम्बन्धी **अस्मि** । सम्बन्धश्च दास्यदासभावः । **प्रतीचीनः** एतत्पर्यन्तम् अस्मत्प्रतिकूलतया स्थितस्त्वं **मा** माम् **उप आ इहि** उपेहि आगच्छ, माम् **अभि आ ववृत्स्व** स्निह्य । **दस्यून्** बाह्याभ्यन्तरशत्रून् **आवां हनाव** ।

---

१. मातृकायामेवं दृश्यते । अस्पष्टम् ।

२. (१) ''युजं वृत्रेषु वज्रिणम्'१-७-५ इति **ऋङ्मन्त्रस्य भाष्यम्** -'हवामहेऽरिवर्ज्यम्' इति । **टीकायां** -'वृजी वर्जन इत्यस्येदं रूपम् । भीतिवशेनारिभिर्वर्ज्यमिति' इति ॥
(२) 'वज्री च ज्ञानानन्दो हि धातुतः' इति १-७-२ **ऋङ्मन्त्रभाष्ये** । ''परमेश्वरस्तु वज्री । ज्ञानानन्दवान् । 'व्रज गतौ' 'रमु क्रीडायाम्' इत्याभ्यां भावे औणादिके डप्रत्यये रलोपे 'वज्र'इतिरूपसिद्धौ तद्वान् 'वज्री' इति सिद्धेः''
– इति **मन्त्रार्थमञ्जरी** ॥

३. '-१-७ -५'इति **ऋङ्मन्त्रटिप्पण्यां पदार्थप्रकाशिकायां** स्पष्टमुपवर्णितमिदम् । तथाहि - 'वृज'अस्मात् कर्मणि औणादिके इनिप्रत्यये नकारस्थस्येकारस्य लोपे, गुणे रपरत्वेन वर् + ज इति जाते निरुक्तात् वकारात्परस्य रेफस्य स्थानव्यत्यासरूपे वर्णविपर्यये वज् + र् + इन् = वज्रिन् इति नकारान्तप्रातिपदिकनिष्पत्तिर्द्रष्टव्या''

४. सिद्धौ च रूपम् इति मातृकायाम् ।

**उत** किञ्च **आ** समन्तात् पिबति स्वरूपानन्दमिति **आपिः** तत्त्वज्ञानम् । द्वितीयार्थे षष्ठी । **आ बोधि** बोधय । 'बोधि +आ+आपेः' इति छेदः ॥६॥

ಪ್ರತಿಪದಾರ್ಥ :- (೬) ಸಹುರೇ = ಭಕ್ತರ ಅಪರಾಧವನ್ನು ಸಹಿಸುವ ಸ್ವಭಾವವುಳ್ಳ, ವಿಶ್ವಧಾ = ಜಗತ್ತನ್ನು ಪ್ರವರ್ತಿಸುವ, ಯಃ = ಯಾವ ವಜ್ರಿನ್ = ಭಯದಿಂದ ಶತ್ರುಗಳಿಂದ ಪರಿತ್ಯಕ್ತನಾದ ಹೇ ಮನ್ಯೋ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಅಯಮ್ = ನಾನು, ತೇ = ನಿನ್ನ ಸಂಬಂಧಿಯು, ಅಸ್ಮಿ = ಆಗಿದ್ದೇನೆ. ಪ್ರತೀಚೀನಃ = ಇಲ್ಲಿಯವರೆಗೂ ನನಗೆ ಪ್ರತಿಕೂಲರಾಗಿ ಇದ್ದ ನೀನು, ಮಾಮ್ = ನನ್ನನ್ನು ಕುರಿತು, ಉಪೇಹಿ = ಬಾ. ಮಾಮ್ = ನನ್ನನ್ನು, ಪ್ರತಿ = ಕುರಿತು, ಆ ವವೃತ್ಸ್ವ = ಸ್ನೇಹ ಮಾಡು, ದಸ್ಯೂನ್ = ಬಾಹ್ಯಶತ್ರುಗಳು ಹಾಗೂ ಆಂತರಿಕಶತ್ರುಗಳನ್ನು, ಆವಾಮ್ = ನಾವಿಬ್ಬರೂ, ಹನಾವ = ಸಂಹರಿಸೋಣ, ಉತ = ಮತ್ತೆ, ಆಪಃ = ತತ್ತ್ವಜ್ಞಾನವನ್ನು, ಆ ಬೋಧಿ = [ನನಗೆ] ಚೆನ್ನಾಗಿ ಬೋಧನೆ ಮಾಡು. ॥ ೬ ॥

6. Oh Lakshmee Narasimha, of Manyu's name!! As the soldiers make a war – and celebrate crying 'Hurrah Hurrah', You raise the war-cry roaring like a lion Hurrah !! Hurrah which makes the enemies flee in fear. You hold the weapons made of the hardest diamonds with ease.. You burn to ashes all the sins of Your devotees, bringing peace, solace and prosperity. I am Yours, I am your devotee. Come to me, to your devotee. Come soon. You are the Creator of the whole universe. Creating, maintaining and destroying the Universe is fun for You. You pervade the entire space and beyond. Protect me from all troubles. Accept me as Your devotee by putting the seal of acceptance on my fealty. Without Your graceful acceptance I am totally blind and ignorant. With my own effort, I cannot see You. I cannot reach you. Only

when You bless me, I shall be able to destroy my internal and external enemies completely. Please let me know in advance the time of the arrival of the enemies and help me to destroy my enemies.

संहिता – **अभि प्रेहि दक्षिणतो भवा**
**मेऽधा वृत्राणि जङ्घनाव भूरि ।**
**जुहोमि ते धरुणं मध्वो अग्र-**
**मुभा उपांशु प्रथमा पिबाव ॥७॥**

पदपाठः – **अभि । प्र । इहि । दक्षिणतः । भव । मे । अध । वृत्राणि । जङ्घनाव । भूरि । जुहोमि । ते । धरुणं । मध्वः । अग्रम् । उभौ । उपऽअंशु । प्रथमा । पिबाव ॥ ७ ॥ (१८ वर्गः) (एकोनविंशतिपदानि)**

**सायणभाष्यम्** - ७ - हे मन्यो अभि प्रेहि । अभिगच्छ । मम युद्धं गत्वा च मे मम दक्षिणतो भव । अधाथावां वृत्राणि शत्रून् भूरि प्रभूतं जङ्घनाव हनाव । ते तुभ्यमग्रं श्रेष्ठं मध्वो मधु सोमरसं जुहोमि । उभौ त्वं चाहं चोपांश्वप्रकाशं प्रथमा प्रथमौ सन्तौ पिबाव ॥७॥

**धीरेन्द्रीया – अथ सप्तमी ऋक्[१] – अभि प्रेहीति ॥ हे मन्यो ! मन्युनामकश्रीनृसिंह । मां दक्षिणतः अभिप्रेहि । मम दक्षिणपार्श्वे भव । मे अधाः 'बलम् ' इति शेषः । अथ अनन्तरं ते तव मध्वः मधूनां धरुणं मधूनां धारणशक्तिप्रदं, मधुररसोपेतम् । 'मध्वः' इति [२] वचनव्यत्ययः छान्दसः । अग्रम् अग्रे जुहोमि होष्यामि । 'हु दानादनयोः' इति धातोः । अथ होमानन्तरम् , उभौ आवाम्, उपांशु एकान्ते, प्रथमा प्रथमौ । 'सुपां**

१. पं - अधिकम् २. पं - नास्ति

**सुलुक् ' इति अप्रत्ययस्य पूर्वसवर्ण आकारः । पिबाव मधु प्राश्नीवः[१] पीत्वा भूरि वृत्राणि पापानि, शत्रुवृन्दानि वा । जङ्घनाव पुनः पुनः हननं कुर्वः ॥ ७ ॥**

**व्याख्या-** । 'भवा मेऽधा' इति दैर्घ्यद्वयमाधिक्ये । अं चतुर्मुखं ब्रह्माणं धत्त इति **अध हे मन्यो मे** मम **अभि** अभिमुखं **प्रेहि** आगच्छ । **दक्षिणतः भव** तिष्ठ । **भूरि** बहूनि **वृत्राणि** बाह्याभ्यन्तरशत्रून् **जङ्घनाव** हनाव [२]। **ते** तुभ्यम् **अग्रं** श्रेष्ठं **धरुणं** पोषकं प्रीतिजनकमिति यावत् । **मध्वः** मधु आनन्दं वहतीति मध्वः सोमरसम् । [३]सान्तं क्लीबम् । **उपांशु जुहोमि** । **उभौ** त्वं चाहं चेत्युभौ **प्रथमा**[४] श्रेष्ठौ **भूत्वा पिबाव** । इह परत्र च त्वद्भक्तेषु मां श्रेष्ठानन्दभाजं कुर्वित्यर्थः ॥

**हनूमत्पक्षे -** अं विष्णुं हृदि सदा दधतीति **अध हे मन्यो मध्वः**[५] आनन्दतीर्थरूपी त्वम् । पूर्वार्धं समम् । **ते** तुभ्यं **धरुणं** धारकं सत्कर्मफलं

---

१. पं - **'पास्यावः '-पां**

२. 'तं त्वा वाजेषु वाजिनम्' १-४-९ इति ऋङ्मन्त्रे इन्द्रनामकभगवन्तं प्रति एवं प्रार्थना दृश्यते । तद्यथा -अज्ञानाद्यरिभिः बाह्यशत्रुभिश्च योधयामः इत्यादि । छलारीये विस्तारो द्रष्टव्यः ।

३. सकारान्तनपुंसकलिङ्गान्तो शब्द इति भावः ।

४. 'प्रथमस्तु भवेदादौ प्रधानेपि च वाच्यवत्' इत्यभिधानम् । 'प्रथेरमच्' इति उणादि ।

५. युक्तिमल्लिकायां-फलसौरभे श्रीमदाचार्याणां मध्वाभिधानप्रतिपादकानि वेदमन्त्राणि विस्तरशो व्याख्यातानि । स्पष्टं यथा -'समध्व आयुवते' उन्मध्व ऊर्मिः' विद्वान् मध्वः' मध्वो अंशुः' 'सिंहं न सन्तं मध्वो अयासम्' प्रधारा मध्वः' अस्मभ्य-मिन्द्रविन्द्रयुर्मध्वः' 'पूर्ण आहावो मदिरस्य मध्वः' 'मध्वो वो नाम मारुतम्' इत्यादीनि ॥ द्रष्टव्यम्-४९९-श्लोकतः ७१३ श्लोक- पर्यन्तम् वेदमन्त्रव्याख्यानम् ॥ आदरजननायैकं प्रदर्श्यते - मध्वशब्दार्थस्तु - तत्रैव ''योयं मध्वो मध्वनामा मदिरस्य मदीरणात् । जातस्य वेदशास्त्रादेर्मथनादुदितस्य वा''॥६६०॥

**जुहोमि । त्वम् आ पिब । मे अग्रं** श्रेष्ठं **उपांशु** स्वयंप्रकाशविष्णुप्रापकं प्रथं तत्त्वज्ञानम् **अव** देहि ॥

**॥ इति ऋग्वेदे अष्टमाष्टकस्य तृतीयेऽध्याये अष्टादशो वर्गः ॥**

ಪ್ರತಿಪದಾರ್ಥ :- (೭) ಅಧ = ಬ್ರಹ್ಮದೇವರನ್ನು ಧರಿಸಿದ, ಹೇ ಮನ್ಯೋ = ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಮೇ = ನನ್ನ ಅಭಿ = ಅಭಿಮುಖವಾಗಿ ಪ್ರೇಹಿ = ಬಾ. ದಕ್ಷಿಣತಃ = ಬಲಗಡೆಯಲ್ಲಿ, ಭವ = ನಿಲ್ಲು. ಭೂರಿ = ಬಹಳರಾದ, ವೃತ್ರಾಣಿ = ಹೊರಗಿನ, ಹಾಗೂ ಒಳಗಿನ ಶತ್ರುಗಳನ್ನು, ಜಂಘನಾವ = ಸಂಹಾರ ಮಾಡೋಣ. ತೇ = ನಿನಗೆ, ಅಗ್ರಮ್ = ಶ್ರೇಷ್ಠವಾದ, ಧರುಣಮ್ = ಪ್ರೀತಿಜನಕವಾದ, ಮಧ್ವಃ = ಆನಂದವನ್ನು ಕೊಡುವ ಸೋಮರಸವನ್ನು, ಉಪಾಂಶು = ಏಕಾಂತದಲ್ಲಿ, ಜುಹೋಮಿ = ಹೋಮಿಸುತ್ತೇನೆ. ಉಭೌ = ನಾವಿಬ್ಬರು, ಪ್ರಥಮಾ = ಶ್ರೇಷ್ಠರಾಗಿ, ಪಿಬಾವ = ಪಾನ ಮಾಡೋಣ. ॥೭॥

7. Oh! Sree Lakshmee Narasimha, of Manyu's name, please be in my strength. Continue to help me for ever, in future also.

I offer you with devotion the sweet 'Somarasa' in the very commencement. Then what is left over of it after the ritual sacrifice let both of us drink together. I take this sacred juice only after you take it. Then let us together destroy all those leaders of Sin in me who constantly instigate me to sin. I pray You to help me by blessing me with strength to wash away my sins and also to defeat the enemies.

* * * *

## ॥ अथ ऋग्वेदे अष्टमाष्टकस्य तृतीये अध्याये एकोनविंशो वर्गः॥

**मन्दबोधिनीव्याख्या –** इदमपि सप्तर्चं मन्युसूक्तम् । अस्य भीमसेनो मारुतिर्ऋषिः । पूर्ववद्देवताद्वयम् । आद्यतिसृणामृचां त्रिष्टुप्छन्दः । अन्त्यानां चतसृणां जगतीच्छन्दः । ध्यानं पूर्ववत् ॥

सायणभाष्यम् - त्वया मन्यो इति सप्तर्चं षोडषं सूक्तम् । आदितस्त्रयस्त्रिष्टुभस्ततश्चतस्रो जगत्यः । पूर्ववदृषिदेवते । तथा चानुक्रान्तम् । 'त्वया मन्यो चतुर्जगत्यन्तम्' इति ॥ अजिरनाम्न्येकाह इदं सूक्तं मरुत्वतीयशस्त्रे निविद्धानम् । सूत्रं पूर्वसूक्त एवोदाहृतम् । विनुत्त्यभिभूतिषु वज्रेष्वेकाहेष्वेते सूक्ते मरुत्वतीयनिष्केवल्ययोः शस्ये । सूत्रितं च "विनुत्त्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते" (आ. ९-८) इति ॥

संहिता - **त्वया मन्यो सरथमारुजन्तो**
**हर्षमाणासो धृषिता मरुत्वः ।**
**तिग्मेषव आयुधा संशिशाना**
**अभि प्र यन्तु नरो अग्निरूपाः ॥१॥**

पदपाठः – **त्वया । मन्यो इति । सऽरथम् । आऽरुजन्तः । हर्षमाणासः । धृषिताः । मरुत्वः । तिग्म ऽ इषवः । आयुधा । संऽशिशानाः । अभि । प्र[1] । यन्तु । नरः । अग्निऽरूपाः ॥१॥** (पञ्चदशपदानि )

सायणभाष्यम् – हे मन्यो हे त्वया सरथं समानमेकमेव रथमारुह्येति शेषः । आरुजन्तो गच्छन्तो हर्षमाणासो हृष्टा धृषिता दृष्टास्तिग्मेषवस्तीक्ष्णबाणा आयुधा आयुधानि संशिशानाः सम्यग्

१. 'उपसर्गाश्चाभिवर्जम्'(फिट् -४-१२) इत्याद्युदात्तः ।

शिश्यन्तो नरो युद्धस्य नेतार इन्द्रादयो देवास्त्वदनुचरा वा अग्निरूपा अग्निवत्तीक्ष्णदाहादिकर्माणः । यद्वा सन्नद्धा कवचिनोऽभि प्रयन्तु युद्धे सहायार्थम् । अत्र 'त्वया मन्यो सरथमारुह्य रुजन्तः' इत्यादि निरुक्तमनुसन्धेयम् ॥ ८ ॥

**धीरेन्द्रीया - अथ अष्टमी ऋक्[१]-त्वया मन्यो इति । हे मन्यो सरथं समानरथं त्वया सह आरुजन्तः आरुहन्तः । यद्वा सरथं रथसहितं शत्रुम् आरुजन्तः आ सम्यक् रोगयुक्तं कुर्वन्तः । 'रुक्[२] रोगे' इत्यभिधानात् । नाशयन्त इति यावत् । हर्षमाणासः हृष्टाः । हृष्यतेः शनजन्ताज्जस् । 'आज्जसेरसुक्' इत्यसुगागमः । धृषिताः बलकृताः अनाहता[३] वा । मरुत्वः वायुवेगाः, तिग्मेषवः तीक्ष्णबाणाः आयुधा[४] आयुधानि, संशिशानाः शाणोल्लीढं कुर्वाणाः । यद्वा सन्नद्धाः अग्निरूपाः[५] अग्निवत् क्रूरकर्माणः नरः मनुष्याः अभि प्रयन्तु शत्रूणामभिमुखं[६] गच्छन्तु ॥ ८ ॥?११**

**व्याख्या-** । अथ प्रथमा । मरुतः नियम्यत्वेनास्य सन्तीति **मरुत्वः** । 'वत्वं रुः सम्बुद्धौ'(पा.सू.८-३-१) इति रुत्वं च । हे **मन्यो त्वया सरथं** सहितं रथम् 'आरुह्य'इति शेषः । **आरुजन्तः** गच्छतः **हर्षमाणासः** हृष्टाः **धृषिताः** धृष्टाः **तिग्मेषवः** तीक्ष्णबाणाः **नरः** व्यूहस्य नेतारः **आयुधा** आयुधानि **संशिशानाः** तीक्ष्णीकुर्वाणाः **अग्निरूपाः** अग्निवद्दाहादिकर्तारः 'सन्नद्धाश्च' इति शेषः । कवचादिसन्नाहवन्त इत्यर्थः । **अभि प्रयन्तु** मत्सहायार्थमभितो गच्छन्तु ॥ ''त्वया मन्यो सरथमारुह्य रुजन्तो (गच्छन्तो ) हर्षमाणासो धृषिता मरुत्वस्तिग्मेषव आयुधानि (संशिश्यमाना) सं निधायमाना अभिप्रयन्तु नरो अग्निरूपाः अग्निकर्माणः,सन्नद्धाः कवचिन

---

१. पं - अधिकम्
२. पं - रुजा पाठः
३. पं - बलात् कृताः - अनाहताः पाठः
४. पं - नास्ति
५. पं - नास्ति
६. पं - मुखाः

इति (वा दधिक्रा)व्याख्यात(स्त)स्यैष भवति''[१] (निरुक्तम् -१०-अध्याये ३० खण्डे) इति निरुक्तिमनुसृत्येयं व्याख्या ॥

ಪ್ರತಿಪದಾರ್ಥ :-(೮) ಮರುತ್ವಃ = ಮರುತ್‌ದೇವತೆಗಳನ್ನು ನಿಯಮಿಸುವ, ಹೇಮನ್ಯೋ = ಎಲೈ ರಾಮದೇವರೇ, ತ್ವಯಾ = ನಿಮ್ಮಿಂದ, ಸರಥಮ್ =ಸಹಿತವಾದ ರಥವನ್ನು [ಆರುಹ್ಯ = ಹತ್ತಿಕೊಂಡು] ಆರುಜಂತಃ = ಹೋಗುತ್ತಿರುವ ಹರ್ಷಮಾಣಾಸಃ = ಸಂತುಷ್ಟವಾದ ಧೃಷಿತಾಃ = ಬಲಿಷ್ಟವಾದ, ತಿಗ್ಮೇಷವಃ = ತೀಕ್ಷ್ಣವಾದ ಬಾಣಗಳುಳ್ಳ ನರಃ = ಯುದ್ಧದಲ್ಲಿವ್ಯೂಹವನ್ನು ಮುಂದೆ ಕೊಂಡೊಯ್ಯುವ ಸೈನಿಕರು,ಆಯುಧಾ =ಆಯುಧಗಳನ್ನು ಸಂಶಿಶಾನಾಃ = ತೀಕ್ಷ್ಣವನ್ನಾಗಿಸುತ್ತಾ, ಅಗ್ನಿರೂಪಾಃ = ಅಗ್ನಿಯಂತೆ ಸುಡುತ್ತ, [ಸನ್ನದ್ಧಾಃ = ಕವಚಾದಿಗಳನ್ನು ಧರಿಸಿ ಯುದ್ಧಕ್ಕೆ ಸನ್ನದ್ಧರಾಗಿ] ಅಭಿಪ್ರಯಂತು = ನನ್ನ ಸಹಾಯಕ್ಕಾಗಿ ಎಲ್ಲ ಕಡೆಯಿಂದ ಬರಲಿ. ॥ ೮ ॥

8.Oh! Lord Narasimha, of Manyu's name! We get into chariots along with you to rush against our enemies. By your grace we make them suffer physically and mentally with fatal and painful diseases and destroy them after defeating them. We will be happy in doing such acts. We will make our own sharp arrows and sharpen them again to shoot out with the ferocity of a tornado. Let our soldiers like a wild fire consume the enemies in the blaze of their ferocity.

**संहिता – [२]अ॒ग्निरि॑व म॒न्यो त्वि॒षि॒तः स॑हस्व**
**सेना॒नीर्नः॑ सहुरे हू॒त ए॑धि ।**

---

१. (..)कंससूचितभागः निरुक्तपुस्तके इदानीमुपलभ्यमानः । मातृकापाठः न व्यत्यस्तः ।

२. 'इव' इत्यस्योपमार्थीयत्वे उदाहरणत्वेनेयम् ऋक् निरुक्तव्याख्यात्रा दुर्गादासेनोदाहृता .''किमुदाहरणम् 'इव' इत्यस्योपमार्थीयत्वे का चोपमाशब्दस्य व्युत्पत्तिरिति ? उच्यते - उपगम्यानया गुणैर्मीयत इत्युपमा । 'अग्निरिव ..नुदस्व'इत्येतदत्रोदाहरणम् । तपसः पुत्रो मन्युर्नाम,तस्येयमार्षम्''-दुर्गादासीये १-४ (पृ-३७) ॥

**हत्वाय शत्रून् वि भंजस्व वेद**
**ओजो मिमानो वि मृधो नुदस्व ॥२ ॥**[1]

**पदपाठः – अग्निः ऽ इंव । मन्यो इतिं । त्विषितः । सहस्व । सेनाऽनीः । नः । सहु रे । हूतः । एधि । हत्वायं । शत्रून् । वि । भजस्व । वेदः**[2] **। ओजः । मिमानः । वि । मृधः । नुदस्व ॥२॥ (एकोनविंशति पदानि)**

**सायणभाष्यम्** - ९ हे मन्यो अग्निरिव त्विषितो ज्वलितः सहस्व । अभिभव शत्रून् । हे सहुरे सहनशील सेनानीरेधि भव नोऽस्माकं सङ्ग्रामे हूतः सन् । किञ्च हत्वाय हत्वा शत्रून्वि भजस्व प्रयच्छास्माकं वेदो धनं शत्रुसम्बन्धि । किञ्चोजो मिमानोऽस्माकं बलं कुर्वन्मृधः शत्रून्वि नुदस्व । घातयेत्यर्थः ॥ ९ ॥

**धीरेन्द्रीया - अथ नवमी ऋक्**[3] **- अग्निरिवेति । हे सहुरे हुरि (हुर्) इति शब्दायमान हे मन्यो, त्वं नः सेनानीः सेनानयनकर्ता हूतः आहूतः एधि । अभिवृद्धो भव । अग्निरिव त्विषितः ज्वलितः । ज्ञानवानित्यर्थः । 'त्विषिरित्यप्यस्य दीप्तिनाम भवति , तथापि ज्ञानप्रशंसा भवति । अज्ञाननिन्दा च' इति निरुक्तेः । यद्वा त्विषितः कान्त्या । सार्वविभक्तिकः**

---

१. ''हे मन्यो सहुरे सहनशील अस्मिन् शत्रूणामभिभवनकाले प्रत्युपस्थित आहूतः सन् अस्माभिः सेनानीः सेनाप्रणेता नः अस्माकम् एधि भव । ततश्च अग्निरिव त्विषितः दीप्तस्त्वं तेजसा भूत्वा सहस्व अभिभव तानस्मच्छत्रून् । हत्वाय हत्वैव , यदेतेषामस्मच्छत्रूणां स्वं वेदो धनं तत् त्वमादाय तेषामस्मद्योधानामोजो बलं मिमानो निर्माय यथावस्तु यथार्हं विभजस्व । निरुक्तव्याख्याने दुर्गादासः(पृ -३९ )

२. अत्र ''वृषादीनां च''(६-१-२०३) इति सूत्रेण उदात्तस्वर इति रा.चं पं.विर-स्वरप्रक्रियायाम् (पृ-७२)

३. पं - अधिकम्

**तृतीयार्थे तसिः । शत्रून् सहस्व सहनं कुरु । 'शत्रून् 'इत्यावर्तते, शत्रून् हत्वाय शत्रूणां हननाय [१] मिमानः वेदः विभजस्व शत्रुमित्रोदासीनान् मिमानः तेषां विवेचनं कुर्वन् धनस्य विभागं कुरु । ओजः बलं प्रभावं वा मिमानः ज्ञातवान् सन् नः विमृधः पापानि शत्रून् वा अप नुदस्व परिहरस्वेत्यर्थः ॥ ९ ॥**

**व्याख्या-** अथ द्वितीया - **सहुरे** सहनशील हे **मन्यो अग्निरिव**[२] **त्विषितः** दीप्तः **सेनानीः** सेनापतिः त्वं **हूतः** आहूतः सन् **नः** अस्माकं **शत्रून् मृधः** सङ्ग्राममासाद्य **सहस्व** अभिभव । तदर्थम् **एधि** वर्धस्व । **शत्रून् हत्वाय**[३] हत्वा **वेदः** धनम् । सान्तम् । धननामसु वेदनिघण्टौ पाठात् [४]॥ **विभजस्व** प्रापयस्व ।'नः'इत्यभ्यासः । **नः** अस्मान् **ओजः** बलं **मिमानः** कुर्वाणः शत्रून् **वि नुदस्व**[५] पराङ्मुखार्थं प्रेरय ॥ २ ॥

ಪ್ರತಿಪದಾರ್ಥ :-(೯) ಸಹುರೇ = ಸಹನಶೀಲರಾದ ಹೇ ಮನ್ಯೋ, ಎಲೈ ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಅಗ್ನಿರಿವ = ಅಗ್ನಿಯಂತೆ, ತ್ವಿಷಿತಃ = ಪ್ರಕಾಶಮಾನನಾದ, ಸೇನಾನೀಃ = ಸೇನಾಪತಿಯಾದ, ತ್ವಮ್ = ನೀನು, ಹೂತಃ = ಯುದ್ಧಕ್ಕೆ ಆಹ್ವಾನ ಮಾಡಲ್ಪಟ್ಟವನಾಗಿ, ನಃ = ನಮ್ಮ, ಶತ್ರೂನ್ = ಶತ್ರುಗಳನ್ನು, ಮೃಧಃ = ಯುದ್ಧಕ್ಕೆ ಒಂದು, ಸಹಸ್ವ = ಪರಾಭವಗೊಳಿಸು. ಅದಕ್ಕಾಗಿ ಏಧಿ = ಅಭಿವೃದ್ಧನಾಗು. ಶತ್ರೂನ್ = ಶತ್ರುಗಳನ್ನು, ಹತ್ವಾಯ = ಕೊಂದು, ವೇದಃ =

१. पं -इतः परम् " विभज्य शत्रुमित्रोदासीनान् मिमानः मानं कुर्वन् विभागं कुरु " इति पाठान्तरम् ।

२. "इव शब्दः उपमार्थः । तथाहि -किञ्चित्वे चोभयत्वे च संशये सदृशे तथा । इवशब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः ॥ इति शब्दनिर्णयवचनमुदाहृतं कर्मनिर्णयभाष्ये ॥ 'उपमार्थे तथाल्पत्वेऽपीवशब्दः प्रयुज्यते' इति च शब्दनिर्णयवचनमुदाहृतं बृ.उ.भाष्ये ६-३-३.

३. "क्त्वो यक्"(७-१-४७ ) इति सूत्रेण छन्दसि 'क्त्वा' इत्यस्य यगागमे रूपम् ॥

४. वैदिकनिघण्टुः २-१०।

५. 'व्यवहिताश्च' इति सूत्रेण 'वि'इत्यस्य 'नुदस्व' इत्यनेनान्वयः ।

ಧನವನ್ನು, ವಿ ಭಜಸ್ವ = ತಂದು ಕೊಡು. ನಃ = ನಮ್ಮನ್ನು, ಓಜಃ = ಬಲಿಷ್ಠರನ್ನಾಗಿ, ಮಿಮಾನಃ = ಮಾಡತಕ್ಕವನಾಗಿ ಶತ್ರೂನ್ = ಶತ್ರುಗಳನ್ನು, ವಿ ನುದಸ್ವ = ನಮಗೆ ಹಿಮ್ಮುಖರಾಗಿ ಹೋಗುವಂತೆ ಪ್ರೇರಿಪಿಸು. ॥ ೯ ॥

9. Oh Lord! when You defeat and destroy the enemies You roar with Your war-cry, 'Hari; Hari' and "Hurrah and Hurrah'. Be the chief of our army. Please come to us whenever we offer Naivedya. We will grow stronger with our offerings to you. Express Your strength like fire. You are the embodiment of knowledge. By Your brightness make our enemies dull. Give us strength to stare at the enemies straight in the eyes. Teach us to destroy the enemies and teach us how to deal in a friendly way among ourselves. Let us look at the enemies with contempt. Knowing the strength of our enemies, you inspire us filling us with strength to finish off our enemies and sins.

**संहिता - सहस्व मन्यो अभिमातिमस्मे**
**रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।**
**उग्रं ते पाजो नन्वा रुरुध्रे**
**वशी वशं नयस एकज त्वम् ॥ ३ ॥**

**पदपाठः – सहस्व । मन्यो इति । अभिऽमातिम् । अस्मे इति । रुजन् । मृणन् । प्र ऽमृणन् । प्र । इहि । शत्रून् । उग्रम् । ते । पाजः । ननु । आ । रुरुध्रे । वशी । वशम् । नयसे । एकऽज । त्वम् ॥३॥** (एकविंशतिः पदानि)

**सायणभाष्यम्** - १० हे मन्यो अस्मे अस्माकमभिमातिमभिगन्तारं शत्रुं सहस्व । अभिभव । रुजन् हिंसन् मृणन् प्रमृणन् प्रकर्षेण

हिंसन् यथा पुनर्न जीवेत्तथा कुर्वंस्त्वं शत्रून्प्रति प्रेहि । ते तव पाजो बलमुग्रमुद्गीर्णं के  नन्वारुरुध्रे अरुन्दन्ति । न तथा सम्भवति । हे एकज त्वमसहाय वशी त्वं वशं नयसे प्रापयसि शत्रुम् ॥ १० ॥

**धीरेन्द्रीया — अथ दशमी ऋक्** [१] **- सहस्वेति ॥ हे मन्यो एकजः मुख्याविर्भूतः, वशी सर्वस्वतन्त्रः, त्वं शत्रून् नः वशं नयसे प्रापयसे । अतः अस्मदभिमातिं अभिमतिं**[२] **सहस्व । अस्मे अस्मभ्यम् । 'सुपां सुलुक्' इति चतुर्थ्याः से इत्यादेशः । अस्मदर्थं शत्रून् रुजन् रोगयुक्तान् कुर्वन्, मृणन् प्रमृणन् मथ्नन्**[३] **प्रमथ्नन् इत्यर्थः । प्रेहि प्रयाहि । ते उग्रं क्रूरं पाजो बलम् अन्वारुरुध्रे । अन्वारूढं बभूव । दृढमासीदित्यर्थः । 'कृणष्व पाजः' इत्यादौ 'पाजो बलम् ' इति अन्यैर्व्याख्याततत्वात् । पाजः बलं**[४] **प्रमृणन् प्रमथ्नन् उग्रं क्रौर्यम् आरुरुध्रे ननु । आरुढं किल । दृढमासीदित्यर्थः**[५] **॥ १० ॥**

**व्याख्या-** अथ तृतीया - एक एव मातृपितृसहायमनपेक्ष्य जायत इति, मूलरूपावताररूपयोर्न्यूनाधिकत्वाभावादेकरूपेण जायत इति वा **एकजः**,तस्य सम्बोधनम् । हे **मन्यो वशी** भक्ताधीन, जगद्वशवान् वा[६]। सर्वं **वशं नयसे** प्रापयसि  तस्मात् **ते** तव **उग्रं** तीक्ष्णं **पाजः** बलं[७] **जनाः आ रुरुध्रे** निरोधं कृतवन्तः । **ननु** इति काकुः[८] । न के अपि निरोधं कुर्वन्तीत्यर्थः ॥ अतः कारणात् **त्वम्,अस्मे**[९] अस्माकम् । चतुर्थी षष्ठ्यर्थे । **शत्रून्** रुषा

---

१. पं - अधिकम्
२. पं - अधिकम्
३. पं - नास्ति
४. पं - अधिकम्
५. पं - दृढीभूतमिति भावः -पाठं
६. ''यदि नाम परो न भवेत् स हरिः कथमस्य वशे जगदेतदभूत्' –द्वा.स्तो (३-५)
७. वेदनिघण्टौ -२ -९, 'कृणुष्व पाजः' इतिमन्त्रे सायणोऽपि ।
८. 'स्वरविशेषो काकुः'इति न्यायसुधापरिमले ।
९. ऋङ्मन्त्र १-२४-७ टिप्पण्यां ''अस्मे 'सुपां सुलुक्'इत्यादिना सुपः 'शे'इत्यादेशः,

**प्रमृणन्** हिंसन्, यथा पुनर्न जीवेयुः तथा प्रकर्षेण हिंसां कुर्वन् **प्रेहि** गच्छ । प्र+इहि । **अभिमातिं**[1] शत्रुं **रुजन्** रोगयुक्तं कुर्वन् **सहस्व** अभिभव ॥३॥

ಪ್ರತಿಪದಾರ್ಥ :- (೧೧) ಏಕಜ = ಮೂಲರೂಪ, ಅವತಾರರೂಪಗಳಲ್ಲಿ ತಾರತಮ್ಯ ರಹಿತನಾದ್ದರಿಂದ ಏಕರೂಪವಾಗಿ [ಒಂದೇ ತೆರನಾಗಿ ] ಅವತರಿಸುವ, ಹೇ ಮನ್ಯೋ = ಎಲೈ ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ವಶೀ = ಭಕ್ತಾಧೀನ - ನಾದವನೇ ! ಜಗತ್ತನ್ನು ನಿನ್ನ ವಶದಲ್ಲಿರಿಸಿಕೊಂಡವನೇ ! ಯಾವ ಕಾರಣದಿಂದ ನೀನು ಎಲ್ಲವನ್ನು, ವಶಮ್= ವಶವನ್ನಾಗಿ, ನಯಸೇ = ಮಾಡುತ್ತೀಯೋ ಆ ಕಾರಣದಿಂದ, ತೇ = ನಿನ್ನ, ಉಗ್ರಃ = ತೀಕ್ಷ್ಣವಾದ, ಪಾಜಃ = ಬಲವನ್ನು, ಜನಾಃ = ಜನಗಳು, ಆ ರುರುಧ್ರೇ = ನಿರೋಧ ಮಾಡಲು ಸಾಧ್ಯವೇನು?. ನನು ! = ಇದು ಅಸಂಭಾವಿತ. ಆ ಕಾರಣದಿಂದ ತ್ವಮ್ = ನೀನು, ಅಸ್ಮೇ = ನಮಗೋಸ್ಕರ, ಶತ್ರೂನ್ = ಶತ್ರುಗಳನ್ನು ಪ್ರಮೃಣನ್ = ಕೋಪದಿಂದ, ಹಿಂಸಿಸುವರಾಗಿ, ಪ್ರೇಹಿ = ಹೋಗಿರಿ, ಅಭಿಮಾತಿಂ = ಶತ್ರುವನ್ನು, ರುಜನ್ = ರೋಗಿಷ್ಟನನ್ನಾಗಿಸಿ ಸಹಸ್ವ = ತಿರಸ್ಕರಿಸು.

10. Oh Lord of Manyu's name: You never take birth as we take it. You just appear as You like and whenever You like, and protect the good and destroy the evil. You are totally independent. Listen to our prayers. Bear with our mistakes. For our sake, make our enemies suffer from fatal diseases. Trouble them. Punish them severely. Make them suffer in all ways. For this purpose please pursue them wherever they are. Your terrible strength cannot be described in words. You punish the enemies mercilessly. Your stern and merciless action towards the evil is very well known.

---

शकारस्येत्संज्ञया लोपे 'शेषे लोपः' इति द् इत्यस्य लोपे 'अस्मे' इति रूपम् ॥

१. 'अभिमातिः शत्रुरुच्यते' इति वेददीपिका ।

**संहिता - एको बहूनामसि मन्यवीळितो**
**विशं विशं युधये सं शिशाधि ।**
**अकृत्तरुक् त्वया युजा वयं**
**द्युमन्तं घोषं विजयाय कृण्महे ॥४॥**

**पदपाठः — एकः । बहूनाम् । असि । मन्यो इति । ईळितः[1] । विशंऽविशम् । युधये । सम् । शिशाधि । अकृत्तऽरुक् । त्वया । युजा । वयम् । द्यु ऽ मन्तम् । घोषम् । विऽजयाय । कृण्महे ॥४॥ (सप्तदश पदानि)**

**सायणभाष्यम्** - ११ हे मन्यो ईळितः स्तुतस्त्वमेक एवासहाय एव बहूनां शत्रूणामसि । भवसि पर्याप्तो हन्तुम् । अतो विशं विशं तां तामस्मद्विरोधिनीं प्रजां युधये युद्धाय सं शिशाधि । सम्यक् तीक्ष्णीकुरु । किञ्च हे अकृत्तरुगच्छिन्नदीप्ते त्वया युजा सहायेन वयं द्युमन्तं दीप्तिमन्तं घोषं सिंहनादवन्तं विजयाय विशिष्टजयार्थं कृण्महे । कुर्मः ॥ ११ ॥

**धीरेन्द्रीया — अथ एकादशी ऋक्[2] - एको बहूनामिति ॥ बहूनां मध्ये एकः ईळितः स्तुतः असि । 'ईड स्तुतौ' इति धातोः । हे[3] मन्यो त्वं विशं विशं प्रति मनुष्यं युधये युद्धार्थं संशिशाधि सम्यङ् नियोजय । अकृत्तरुक् अच्छिन्नरुजः । व्यत्ययादेकवचनम् । त्वया युजा त्वया सहितेन, द्युमन्तं घोषं कान्तियुक्तमट्टहासम् । सिंहनादमिति यावत् । विजयाय विजयार्थं कृण्महे कुर्मः ॥ ११ ॥**

---

१. १-१३-४ ऋङ्मन्त्रार्थमञ्जरी । 'ईड स्तुतौ' निष्ठा क्तः ।
२. पं - अधिकम्
३. पं - अधिकम्

**व्याख्या-** हे **मन्यो ईळितः** स्तुतः । **त्वम् एक एव** असहाय एव **बहूनां** शत्रूणाम् **असि** हन्तुं पर्याप्तो असीत्यर्थः । अतः **विशं विशम्** अस्माकं प्रतिप्रजं **युधये** युद्धाय **संशिशाधि** तीक्ष्णीकुरु शिक्षयेत्यर्थः । अकृत्ता अच्छिन्ना रुक् प्रकाशो यस्य,तत्सम्बुद्धौ । तथा **युजा** सहायभूतेन त्वया 'अनुगृहीताः'इति शेषः । **द्युमन्तं** प्रकाशमानं **घोषं** सिंहनादं **विजयाय** अस्मत्सैन्यजयाय **कृण्महे** कुर्मः । शत्रुहननासामर्थ्यात् त्वज्जयप्रयुक्तसिंहध्वनिमात्रमस्माभिः क्रियत इत्यर्थः ॥४॥

ಪ್ರತಿಪದಾರ್ಥ :- (೧೨) ಹೇ ಮನ್ಯೋ = ಎಲೈ ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಈಳಿತಃ = ಸ್ತೋತ್ರ ಮಾಡಿಸಿಕೊಂಡ, ತ್ವಮ್ = ನೀನು, ಏಕ ಏವ = ಯಾರೊಬ್ಬರ ಸಹಾಯವಿಲ್ಲದೇ, ಬಹೂನಾಮ್ = ಅನೇಕ ಶತ್ರುಗಳ ಅಸಿ = ಸಂಹಾರವನ್ನು ಮಾಡಲು ಸಮರ್ಥರಾಗಿದ್ದೀಯೆ. ಆ ಕಾರಣದಿಂದ, ವಿಶಂ ವಿಶಮ್= ನಮ್ಮ ಎಲ್ಲ ಪ್ರಜೆಗಳನ್ನು, ಯುಧಯೇ = ಯುದ್ಧಕ್ಕಾಗಿ, ಸಂಶಿಶಾಧಿ = ಚೆನ್ನಾಗಿ ತೀಕ್ಷ್ಣವಾಗುವಂತೆ ಶಿಕ್ಷಣ ಮಾಡು. ಹೇ ಅಕೃತ್ತರುಕ್ = ಎಲೈ ಅಡೆ ತಡೆಯಿಲ್ಲದ ಪ್ರಕಾಶವುಳ್ಳ ರಾಮದೇವರೇ ! ಯುಜಾ = ನನ್ನ ಸಹಾಯವಾಗಿ ಬಂದ ನಿನ್ನಿಂದ ಅನುಗೃಹೀತರಾದ ನಾವು, ದ್ಯುಮಂತಮ್ = ಪ್ರಕಾಶಮಾನವಾದ ಘೋಷಮ್ = ಸಿಂಹನಾದವನ್ನು, ವಿಜಯಾಯ = ನಮ್ಮ ಸೈನ್ಯದ ಜಯಕ್ಕೋಸ್ಕರ, ಕೃಣ್ಮಹೇ = ಮಾಡುತ್ತೇವೆ.

ನಮಗೆ ಶತ್ರುಗಳನ್ನು ಕೊಲ್ಲುವ ಸಾಮರ್ಥ್ಯವಿಲ್ಲದಿರುವುದರಿಂದ ನೀವು ಗೆದ್ದಾಗ ಆ ಸಂತೋಷಕ್ಕಾಗಿ ಸಿಂಹನಾದವನ್ನು ಮಾತ್ರ ನಾವು ಮಾಡುತ್ತೇವೆ ಎಂದು ಭಾವ. ॥ ೧೧ ॥

11. Oh Lord, You are the only One, God of gods, worthy to be praised and glorified totally. Devotees have been fully convinced and declare You the Supreme in all auspicious attributes. Bless us, inspire us to fight against our enemies successfully. Bless us with adequate strength. Let not our

spirit of fighting the war fade and the brightness in our face pale. When you are with us, we make a loud war-cry like the roaring of the lion to reach the sky and echo and reecho, frightening the enemies.

**संहिता - विजेषकृदिन्द्रं इवानवब्रवो३ऽ**
**स्माकं मन्यो अधिपा भंवेह ।**
**प्रियं ते नामं सहुरे गृणीमसि**
**[1]विद्मा तमुत्सं यतं आ बभूथं ॥५ ॥**

**पदपाठः – विजेष ऽ कृत् । इन्द्रः ऽ इव । अनवऽब्रवः ।**
**अस्माकम् । मन्यो इतिं । अधिऽपाः । भव । इह ।**
**प्रियम् । ते । नामं । सहुरे । गृणीमसि ॥०॥[2]**
**विद्म । तम् । उत्सम् । यतः । आ ऽबभूथं[3]॥**
**(अष्टादश पदानि)**

**सायणभाष्यम्** - १२ हे मन्यो इन्द्र इव विजेषकृद्विजयकर्ता तथान वब्रवोऽनिन्दितवचनः । अनवब्रवोऽनवक्षिप्तवचन इति यास्कः । ईदृशास्त्वमस्माकमधिपा अधिकं पाता रक्षिता भवेहास्मिन्यज्ञे । हे सहुरे शत्रूणां सहनशील ते प्रियं नाम स्तोत्रं गृणीमसि । गृणीमः । स्तुमः । यतो नाम्नः स्तोत्रत्वमाबभूथ आभवसि प्रवृद्धो भवसि तमुत्सं बलस्योद्गमयितारं विद्म । जानीमः ॥ १२ ॥

---

१. 'द्व्यचोऽतस्तिङः' (पा.सू.६-३-१३५) वैदिकप्रक्रिया इतिसूत्रेण मन्त्रे दीर्घः ।

२. अनमोल् - ऋग्वेदीयपदपाठपुस्तके '०' एवं चिह्नं दृश्यते । पदानां स्वरः नोल्लिखितः ॥ परं तु सायणभाष्ये तथा अन्यपुस्तकेषूल्लिखितः ।

३. "बभूथाऽऽततन्थजगृम्भववर्थेति निगमे"(वार्तिकम् -२५२७)'भाषायां तु बभूविथ' -सिद्धान्तकौमुदी -वैदिकीप्रक्रिया
'एषां वेद इडभावो निपात्यते'इति सुबोधिनी (पृ-४३२)।

**धीरेन्द्रीया - अथ द्वादशी ऋक्[१] - विजेषकृदिति ॥ हे मन्यो विजेषकृत् विजयेच्छाकारी, विजयशब्दोपपदात् ' इषु इच्छायाम् ' इति धातोः कप्रत्यये 'पुगन्तलघूपधस्य' इति गुणे व्यत्ययेन यकार लोपे विजेष इति रूपम् । तस्य कृच्छब्देन समासे [२]'विजेषकृत्' इति रूपम् । 'विजिगीषाकृत्' इति तदर्थः । इन्द्र इव परमैश्वर्यशाली परमात्मा इव, शचीपतिरिवेति वा । अनवब्रवः अवब्रूते इत्यवब्रवः, स न भवतीति अनवब्रवः, अनिन्दक[३] इति यावत् । यद्वा अनवः पुराणः ब्रूते इति ब्रवः वक्ता[४] । अस्माकम् अधिपाः रक्षकः, भव । विश्वपाशब्दवदाकारान्तोऽयम्[५]। इह[६] इदानीं सहुरे इति ते तव प्रियं[७] प्रीत्यास्पदं नाम नामधेयं गृणीमसि गृणीमः । उच्चारमामः इत्यर्थः[८] । उत्संयतः उत्कृष्टतया सम्यक् यत्नवान् बभूथ भवसि इति विद्मः जानीमः ॥ १२ ॥**

**व्याख्या-** अथ पञ्चमी - **सहुरे** भक्तापराधसहनशील हे **मन्यो इन्द्र इव विजेषकृत्** विजयकृत् **अनवब्रवः** अशेषैरनिन्दितवचनः । कम्पस्य 'अशेषैः' इत्यर्थः ।

> ''कम्पोऽशेषग्रहे क्वापि लज्जायां वा पुरातने ।
> पृथक्त्वेऽधृष्यतायां वा हरिणर्क्संहितोदितः''
> (१-४-१०.ऋग्भाष्योदाहृतवचनम् )

इति **स्वरनिघण्टुः** ॥ ''अनवब्रवः अनवक्षिप्त(वचनः)''[९] **(निरुक्ते-६-२९)** इति निघण्टुकारो यास्कश्च ॥ **त्वम्** अस्माकम् **अधिपाः** अधिकं पाता

---

१. पं - अधिकम्
२. पं - इतः परं 'रूपम् ' इत्यन्तं नास्ति ।
३. पं - अनपवादी -पाठां
४. पं - इयं पङ्क्तिर्नास्ति ।
५. पं - 'भव' इति अत्र पठ्यते
६. पं - अधिकम्
७. पं - अधिकम्
८. पं - 'इत्यर्थः ' इति नास्ति
९. यो अनवक्षिप्तवचनः सभवेदनवब्रवः' -(५-३२) वैदिककोशे ।

रक्षक इत्यर्थः । **भव** । **इह** इदानीं **ते** तव **प्रियं नाम** गुणोत्कर्षप्रतिपादक-शब्दम् । ''णमु उपह्वये शब्दे च'' इत्यस्मात् 'सीमन्नामन्' इति निपातः । **गृणीमसि** उच्चारयामः । **यतः** यस्मात् स्तोत्रात् यः त्वम् **आ** अभिव्याप्तः **बभूथ** भवसि **तं** त्वा **उत्सं** बलस्योद्गमयितारं **विद्मः** जानीमः । 'तन्नाम' इति पूर्वेणान्वयः ॥५॥

ಪ್ರತಿಪದಾರ್ಥ :-(೧೨ ) ಸಹುರೇ = ಭಕ್ತರ ಅಪರಾಧವನ್ನು ಸಹನೆ ಮಾಡುವ ಹೇ ಮನ್ಯೋ = ಎಲೈ ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಇಂದ್ರ ಇವ = ಇಂದ್ರದೇವರಂತೆ, ವಿಜೇಷಕೃತ್ = ವಿಜಯವನ್ನು ಉಂಟುಮಾಡುವ ಅನವಬ್ರವಃ = ಯಾರಿಂದಲೂ ನಿಂದ್ಯವಲ್ಲದ ಮಾತುಗಳುಳ್ಳ, ತ್ವಮ್ = ನೀನು ಅಸ್ಮಾಕಮ್ = ನಮಗೆ, ಅಧಿಪಾಃ = ಚೆನ್ನಾಗಿ ರಕ್ಷಕನು ಭವ =ಆಗು. ಇಹ = ಈಗ , ತೇ = ನಿನ್ನ ಗುಣಗಳ ಪ್ರಿಯಂ ನಾಮ = ಮಹಿಮೆಯನ್ನು ಹೇಳುವ ಪ್ರಿಯವಾದ ಶಬ್ದಗಳನ್ನು, ಗೃಣೀಮಸಿ = ಉಚ್ಚಾರಣೆ ಮಾಡುತ್ತೇವೆ. ಯತಃ = ಯಾವ ಸ್ತೋತ್ರದಿಂದ, ಯಾವ ನೀನು ಆ = ಸರ್ವತ್ರ ವ್ಯಾಪ್ತನು ಎಂಬ ಜ್ಞಾನವಿಷಯನು ಬಭೂಥ = ಆಗುತ್ತೀಯೋ, ತಮ್ = ಅಂತಹ ನಿನ್ನನ್ನು ಉತ್ಸಮ್ = ಬಲವನ್ನು ನೀಡುವವನೆಂದು, ವಿದ್ಮಃ = ತಿಳಿಯುತ್ತೇವೆ. ॥ ೧೨ ॥

12. Oh! Lakshmee Narasimha, of Manyu's name, please Bless us, Your devotees, to be successful. You have the name Indra, as the first, as you are the Lord of all riches. You can be compared only with Yourself, but with none-else. Where can we find one who can be compared with You. It is needless to say that You are like Indra, the Spouse and the Lord of Sachi Devi. You do not hate any one. Your words are sweet, gentle and musical too. You are the oldest and wisest. Be our protector. Being protected by you, we will be uttering the words 'Sa Hari, Hurrah, Hurrah' which is also Your name. We have learnt that every word and sound primarily means aptly Your name and Your attributes. Oh,

Lord Kindly bless us to repeat Your names, and such attempts which put Your names on our lips with devotion naturally. Bless us with such noble thoughts and words.

**संहिता - आभूंत्या सहजा वंज्रसायक**
**सहों बिभर्ष्यभिभूत उत्तंरम् ।**
**क्रत्वां नो मन्यो सह मेद्येधि**
**महाधनस्यं पुरुहूत संसृजिं ॥६॥**

**पदपाठः – आऽभूंत्या । सहऽजाः । वज्र । सायक । सहंः । बिभर्षि । अभिऽभूते । उत् ऽतंरम् । क्रत्वां । नः । मन्यो इतिं । सह । मेदि । एधि । महाऽधनस्यं । पुरु ऽहूत । संसृजिं ॥६॥ (सप्तदशपदानि)**

**सायणभाष्यम्** - १३ हे वज्र वज्रवत्सारभूत हे सायक शत्रूणामन्तकराभिभूते शत्रूणामभिभावक मन्यो आभूत्या । आभूतिरभिभवः । तेन सहजाः सहैवोत्पन्नस्त्वमुत्तरमुत्कृष्टतरं सहो बलं बिभर्षि । धारयसि । हे मन्यो क्रत्वा कर्मणा सह नोऽस्माकं मेद्येधि । स्निग्धो भव । कुत्रेति तदुच्यते । महाधनस्य । सङ्ग्रामनामैतत् । सङ्ग्रामस्य संसृजि सर्गे । हे पुरुहूत बहुभिराहूतेति मन्युसम्बोधनम् ॥ १३ ॥

**धीरेन्द्रीया - अथ त्रयोदशी ऋक्[1] -आभूत्येति ॥ हे पुरुहूत[2], पुरुभिः श्रेष्ठैः ब्रह्मादिभिः हूतः[3] स्तुतः, आकारितो वा । तस्य सम्बुद्धिः । अभिभूत पराभिभवकर्तः, वज्रसायक [4]वज्रसदृशबाणधारक । त्वं सहजाः**

---

१. पं - अधिकम् २. पं - नास्ति ३. पं - नास्ति

४. पं - अत्र इतः परम् " गतम् । मन्यो आभूत्या सम्यक् सम्पदा सहजा सहजः । दीर्घः छान्दसः । सहजातो असि" ' इति पाठो दृश्यते । 'वज्रसदृश..' इत्यारभ्य 'भव । त्वम्' इत्यन्तं नास्ति ।

**स्वाभाविकप्रादुर्भाववान् असि । त्वं नः आभूत्या आ समन्तात् भूत्यै ऐश्वर्याय भव । त्वम् उत्तरम् उत्तमं सहः बलं बिभर्षि धारयसि[1] । 'भृञ् भरणे' इति धातोः । नः सहं बलं क्रत्वा कृत्वा महाधनस्य महाद्रविणस्य संसृजि[2] सर्जनाय एधि भव, त्वं च मेदि मेदिः । 'मिदि स्नेहने' । मम विषये स्नेहवान् हृष्टो भव ॥ १३ ॥**

**व्याख्या-** अथ षष्ठी -**वज्र** भयवर्जित[3], वज्रवत् सार इति वा **सायक** शत्रूणामङ्कुश । "षो अन्तकर्मणि" (पा.सू.) इत्यस्मात् ण्वुल् । **अभिभूत** शत्रूणामभिभवभावक **आभूत्या** शत्रूणमभिभवेन **सहज ।** त्वदवतारमात्रेणैव शत्रूणां तिरस्कृतिर्भवतीति भावः । **महाधनस्य** युद्धस्य । वेदनिघण्ठौ[4] युद्धनामसु पाठात् ॥ **संसृजि** प्रयोगे पुरुभिरिन्द्रादिरपि हूत आहूत । हे **मन्यो उत्तरम्** उत्तमं **सहः** बलं **बिभर्षि** । **नः** अस्माकं **क्रत्वा** त्वदुपासनादिकर्मणा **सह मेदि** एधि । 'टु मिदा स्नेहने' 'एध वृद्धौ' । स्नेहाभिवृद्धिं कुर्वित्यर्थः ॥ मत्कृतकर्मसु सत्स्वसत्सु वा क्षमां कृत्वा स्नेहं कुर्विति भावः ॥ ६ ॥

ಪ್ರತಿಪದಾರ್ಥ :- ವಜ್ರ = ಭಯರಹಿತನಾದ, ಸಾಯಕ = ಶತ್ರುಗಳಿಗೆ ಅಂಕುಶದಂತೆ ಇರತಕ್ಕ, ಅಭಿಭೂತ = ಶತ್ರುಗಳಿಗೆ ತಿರಸ್ಕಾರವನ್ನುಂಟುಮಾಡುವ, ಆಭೂತ್ಯಾ ಸಹಜ = ಶತ್ರು ತಿರಸ್ಕಾರರೂಪ ವೈಭವದಿಂದ ಸಹಿತವಾಗಿಯೇ ಅವತರಿಸುವ, ಮಹಾಧನಸ್ಯ = ಯುದ್ಧದ, ಸಂಸೃಜಿ = ಪ್ರಯೋಗದಲ್ಲಿ, ಪುರುಹೂತ = ಇಂದ್ರಾದಿದೇವತೆಗಳಿಂದ ಆಹ್ವಾನಿತನಾದ, ಹೇ ಮನ್ಯೋ = ಎಲೈ ಮನ್ಯುನಾಮಕ ರಾಮದೇವರೇ, ಉತ್ತರಮ್ = ಉತ್ತಮವಾದ, ಸಹಃ =

---

१. पं - अत्र इतः परम् 'कृत्वा' इत्यन्तं नास्ति ।

२. पं - अत्र इतः परम् "एधि भव,नः सत्कृत्वा मेदि मम हृष्टो भव" इति पाठो दृश्यते ।

३. 'वर्जनाद्वज्रमुच्यते'इति ब्र.सू.भा.उ. ब्रह्मवैवर्तवचनम्

४. २-१७ षट् चत्वारिंशत् सङ्ग्रामनामानि ।

ಬಲವನ್ನು, ಬಿಭರ್ಷಿ = ಧಾರಣೆ ಮಾಡಿದ್ದೀಯೆ. ನಃ = ನಮಗೆ, ಕ್ರತ್ವಾ = ನಿನ್ನ ಉಪಾಸನೆರೂಪವಾದ ಕಾಮದಿಂದ, ಮೇಧಿ, ಏಧಿ = ಸ್ನೇಹಾಭಿವೃದ್ಧಿಯನ್ನು ಮಾಡು. ॥ ೧೩ ॥

13. Oh Lord Lakshmee Narasimha! You have been gloriously and profusely praised by gods like Brahma and others. They will be remembering You always and call You again and again with devotion. You reject and ignore those who dislike You and Your devotees. You are the Lord of the highest strength. Help us!! Help us to acquire the real riches and prosperity. Oh God, Be kind and be pleased with us, always.

**संहिता - संसृष्टं धनमुभयं समाकृत-**
**मस्मभ्यं दत्तां वरुणश्च मन्युः ।**
**भियं दधाना हृदयेषु शत्रवः**
**पराजितासो अप नि लयन्ताम् ॥७॥**

**॥इति षष्ठोऽनुवाकः॥**

**पदपाठः – सं ऽ सृष्टम् धनम् । उभयम् । सम् ऽ आकृतम् । अस्मभ्यम् । दत्ताम् । वरुणः । च । मन्युः । भियम् । दधानाः । हृदयेषु । शत्रवः । परा ऽजितासः । अप । नि । लयन्ताम् ॥ ७ ॥ (१७ वर्गः ) (सप्तदश-पदानि)**

**॥ इति ऋग्वेदे अष्टमस्य तृतीयेऽध्याये सप्तदशो वर्गः ॥**

**॥ मन्युसूक्तं समाप्तम् ॥**

**सायणभाष्यम्** - १४ संसृष्टमविभागमापन्नमुभयमुभयविधं धनं समाकृतं सम्यगानीतमस्मभ्यं दत्ताम् । कः । वरुणश्च देवो मन्युश्च । भियं भयं हृदये दधानाः शत्रवोऽस्मद्विरोधिनः पराजितासः पराजिता अप निलयन्ताम् । अपनिलीना भवन्तु ॥ १४ ॥

॥ इति सायणभाष्यं समाप्तम् ॥

**धीरेन्द्रीया - अथ चतुर्दशी ऋक्** [1] **- संसृष्टमिति । वरुणः वरोन्नयनात् वरुणशब्दवाच्यः वरुणस्थो भगवान् मन्युः मन्युनामकश्रीनृसिंहः संसृष्टं स्वीयभूतं** [2] **धनं मम, परस्य च उभयम् उभयविधमपि एतद्धनं समाकृतं सम्यगाकृष्टं** [3] **समतया विभक्तं वा । अस्मभ्यं दत्तां ददातु । दयालुत्वेन**[4] **तेन बलादाकृष्य प्रदानेन शत्रवः पराजितासः पराभूताः भियं भीतिं दधानाः सन्तः अपनिलयन्ताम् अस्माद्देशादपक्रम्य कुत्रचिल्लीना भवन्तु ॥**

**अनेन शत्रून् ज्ञात्यादीन् अभिभूय मिश्रीभूतं मदीयं तदीयं च धनं दत्वा (श्रीमन्युनामा नृसिंहः) मां रक्षतु इति** [5] **प्रार्थना क्रियते ॥१४॥**

**॥ इति श्रीमद्वादीन्द्रतीर्थकरकमलसञ्जात-**
**श्रीधीरेन्द्रतीर्थश्रीपादविरचिता मन्युसूक्तव्याख्या मन्दबोधिनी समाप्ता ॥**

**व्याख्या-** अथ सप्तमी – आवृणोति सर्वमिति **वरुणः** । व्याप्तः श्रीरामः । मानयति बोधयति वेदार्थमिति **मन्युः** वेदव्यासश्चेत्युभौ ॥

**हनूमत्पक्षे –** वारयति दैत्यानिति **वरुणः** हनूमान् शास्त्रबोधकत्वात् **मन्युः** श्रीमदानन्दतीर्थश्चेत्युभौ । रूपद्वयविवक्षया ।....[6]भक्तम् **उभयं** बाह्यं

---

१. पं - अधिकम्
२. पं - मिश्रीभूतम् -पाठां
३. पं -नास्ति
४. पं -अधिकम्
५. पं -'मन्युनामकश्रीनृसिंहप्रार्थना ' पाठां
६.अत्र मातृका नष्टा ।

रत्नादिरूपम् आन्तरं विद्यारूपं च **धनं**[१] **समाकृतम्** **अस्मभ्यं** दत्ताम् । मम **शत्रवः** बाह्याभ्यन्तरशत्रवः **हृदयेषु** **भियं** दधाति । ते **पराजितासः** पराभूताः **अप** **निलयन्ताम्** मद्वियुक्ताः सन्तः निलीना भवन्तु ॥

**हनूमन्मध्वहृद्वद्धश्रीरामव्यासतुष्टये ।**
**कृता कृतिश्चिरं जीयात् कवीशः कृष्णशर्मणः ॥१॥**

**॥ इति श्रीमद्घाटिकाशतअष्टभाषासरसपद्यरचनाचणस्य द्वात्रिंशदुपनिषद्रहस्यपारदश्वनो मातरिश्वनो वत्सस्य रामपादैकशरणसकलकर्मणः कृष्णावधूतशर्मणः कवेः कृतौ मन्युसूक्तव्याख्या मन्दबोधाख्या समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

ಪ್ರತಿಪದಾರ್ಥ :- (೧೪ ) ವರುಣಃ = ವ್ಯಾಪ್ತರಾದ ರಾಮದೇವರು ಮತ್ತು ಮನ್ಯುಃ = ವೇದಾರ್ಥವನ್ನು ಬೋಧಿಸತಕ್ಕ ವೇದವ್ಯಾಸದೇವರು, ಉಭಯಮ್ = ರತ್ನ ಮುಂತಾದ ಬಾಹ್ಯವಾದ ಹಾಗೂ ವಿದ್ಯಾರೂಪವಾದ ಆಂತರಿಕವಾದ ಧನಮ್ = ಸಂಪತ್ತನ್ನು, ಸಮಾಕೃತಮ್ = ಸಮವಾಗಿ ವಿಭಾಗಮಾಡಿ ಅಸ್ಮಭ್ಯಮ್ = ನಮಗೆ, ದತ್ತಾಮ್ = ಕೊಡಲಿ, ಶತ್ರವಃ = ನನ್ನ ಬಾಹ್ಯ ಶತ್ರುಗಳು ಹಾಗೂ ಅಂತರ ಶತ್ರುಗಳು ಹೃದಯೇಷು = ಹೃದಯಗಳಲ್ಲಿ, ಭಿಯಮ್ = ಹೆದರಿಕೆಯನ್ನು, ದಧಾನಾಃ = ಉಂಟುಮಾಡುತ್ತಾರೆ. ಅವರುಗಳು ಪರಾಜಿತಾಸಃ = ತಿರಸ್ಕೃತರಾದ-ವರಾಗಿ ಅಪ ನಿಲಯಂತಾಮ್= ನನ್ನಿಂದ ದೂರವಾಗಿ ಅಡಗಲಿ. ॥ ೧೪ ॥

ಇಲ್ಲಿಗೆ ಕೃಷ್ಣಾವಧೂತಪಂಡಿತಾಚಾರ್ಯರ ವ್ಯಾಖ್ಯಾನಾನುಸಾರಿಯಾದ
ಮನ್ಯುಸೂಕ್ತದ ಪ್ರತಿಪದಾರ್ಥವು ಸಮಾಪ್ತವಾಯಿತು.

14. Oh Lord Lakshmee Narasimha! You have been called Varuna also, as You have been straying with your special

---

१. धनशब्दो-वित्तरयिशब्दपर्यायो अध्यात्मार्थे ज्ञानार्थक इति १-१-३ मन्त्रार्थमञ्जर्याम्

presence in Varuna showing virtuous people the right royal path. You have made your special presence in Manu also taking the name of Manu in Lakshmee Narasimha. Let all the riches and treasures and my own, be always with me. Let the enemies be condemned and exiled to quit our country and hide themselves in shame in some obscure corner.

Oh Lord Narasimha, please bless us by protecting us always.

**॥ श्री मध्वेशार्पणमस्तु ॥**

* * * * *

॥श्रीहनुमद्भीममध्वान्तर्गतनरहरिरामकृष्णवेदव्यासाय नमः ॥

# धर्मसूक्तम् - सत्यसन्धीयव्याख्यासहितम्

## मङ्गलाचरणम्

**मध्वार्यमीडे यो मुक्तेरध्वानं मामदर्शयत् ।**
**विध्वाननमुपन्यासमुध्वानजितवादिनम् ॥**

[१]गायत्र्युपदेशविशिष्टसच्छास्त्रोपदेशेन सन्मार्गप्रदर्शकत्वेन,स्वजनकत्वेन च तत्स्तवनस्याप्यावश्यकत्वेन श्रीमदाचार्यान्,तदन्तर्गत सकलदुरितदूरीकरणसमर्थं श्रीयादवकृष्णं च स्तौति ॥ **मध्वार्यमिति** ॥ अहं मध्वार्यमीडे । मध्व इत्यार्यः - आचार्यः । बहुव्रीहिर्वा । सर्वज्ञपक्षे मध्वार्यं मध्वाचार्यम् । विष्णुपक्षे मध्वस्य आर्यः पिता,तम् । मधोः कुलस्य आर्यः इति वा । मधुः 'मधु नाम सुखं विद्यात्' इत्युक्तेः सुखात्मकः वा आर्यो वरणीय 'अभित्वा देव सवितरीशानां वार्याणाम्' इति ऋचः भाष्ये 'वार्यं हि वरणीयतः' इति व्याख्यानात् । मधुश्चासौ वार्यश्च, तमिति वा । मधोः तन्नामकस्य दैत्यस्य आ सम्यक् अरिः शत्रुः, सचासौ अश्च, 'अ इति ब्रह्म'इति श्रुतेः । मध्वचार्यः, तमिति वा । 'मध्वित्यानन्द उद्दिष्टः' इत्युक्तेः मधुः आनन्दः । 'वा गतिगन्धनयोः' 'वेति ज्ञानमुदाहृतम्' इत्युक्तेः आनन्दज्ञानात्मकः, स चासौ आर्यश्चेति वा । मधुविद्यया वः ज्ञानं येषां ते सज्जनाः, तान् प्रति 'रीङ् क्षये' न विद्यते र् -क्षयः यस्मिन् लोके वैकुण्ठे तं यापयतीति वा । तं श्रीकृष्णं स्तौमि ॥

सर्वज्ञपक्षे 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् । मध्व आनन्दतीर्थ स्यात् तृतीया मारुता तनुः'' इत्युक्तेः आनन्दतीर्थेत्युपपदाचार्यं वा । कथम्भूतम् ? विध्वाननं चन्द्रवदनम् । सर्वत्र समम् । उपन्यासाख्यसुध्वानेन

---

१. इदं व्याख्यानं श्रीसत्यसन्धतीर्थैरेव कृतम् ।

समीचीनध्वनिना जिताः वादिनः येन सः,तं मध्वशास्त्रनिर्माणेन स्वोपन्यासेन जितसङ्करादिवादिनं मध्वम् । उपन्यासध्वनिना ब्रह्मसूत्रभारतादिना जितदुर्वादी यः वेदव्यासः स मध्वपिता माम् उपन्यासध्वनिजनितवादिनम् । सुध्वानेन मध्वशास्त्रप्रवचनोपन्यासादिध्वनिना जितवादी,तम् । न्यासेन काम्यकर्मन्यासेन जितारिषड्वर्गः । न्यासश्च सुध्वानश्च तौ,ताभ्यां जिताः वादिनो येन, तम् । ईदृशं मां प्रति मुक्तेरध्वानं मुक्तिमार्गम् अदर्शयत् । तमित्यन्वयः ॥

**दशममण्डले अष्टमाष्टके षष्ठाध्याये दशमे अनुवाके षोडशसप्तदशवर्गौ**

**ऋषिः -सध्रिर्वैरूपो घर्मो वा तापसः ।**

**छन्दः - १-३,५-१० त्रिष्टुप् ;४ जगती ॥**

**देवता -विश्वेदेवाः**

**संहिता –** **घ॒र्मा सम॑न्ता त्रि॒वृत॒ं व्या॑पतु-**
**स्तयो॒र्जुष्टिं॑ मात॒रिश्वा॑ जगाम ।**
**दि॒वस्पयो॒ दिधि॑षणा अवेषन्**
**वि॒दुर्दे॒वाः स॒हसा॑मानम॒र्कम् ॥१॥**

**पदपाठः -घ॒र्मा । सम् ऽ अन्ता । त्रि॒ऽवृत॑म् । वि । आ॒प॒तुः । तयोः॑ । जुष्टि॑म् । मा॒त॒रिश्वा॑ । ज॒गा॒म॒ । दि॒वः । पयः॑ । दिधि॑षणाः । अ॒वे॒ष॒न् । वि॒दुः । दे॒वाः । स॒ह॒ऽसा॑मानम् । अ॒र्कम् ॥१॥ (सप्तदशपदानि)**

**सायणभाष्यम्-**

घर्मेति दशर्चं द्वितीयं सूक्तम् । सध्रिर्नाम वैरूप ऋषिः । तपसः पुत्रो घर्मो वा । चतुर्थी जगती । शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम् ।

'घर्मा सध्रिस्तापसो वा घर्मौ वैश्वदेवं चतुर्थी जगती' इति ॥ गतो विनियोगः ॥

समन्ता समन्तौ संव्याप्तदिगन्तौ घर्मा ॥ घृ क्षरणदीप्त्योः ॥ घर्मौ दीप्यमानावग्न्यादित्यौ । त्रिवृतम् । 'त्रयो वा इमे त्रिवृतो नाकाः' (ऐ.आ. १-१-२) इत्याम्नानात् । त्रैलोक्यं व्यापतुः । स्वतेजोभिर्व्याप्तवन्तौ । मातरिश्वा अन्तररिक्षे वर्तमानो वायुस्तयोरग्न्यादित्ययोर्जुष्टिं प्रीतिं जगाम । गतवान् । यदा सहसामानम् । सामशब्द उपलक्षकः । वेदत्रयतेजस्सहितम् । ' सर्वं तेजःसमूहं शश्वत् 'इत्याम्नानात् । ईदृशमर्कमर्चनीयं सूर्यं देवा दीप्यमानाः स्वरश्मयो विदुः विविदुः लेभिरे प्रापुः । तदा दिधीषाणा लोकधारणशीलास्ते दिवो द्युलोकस्य सम्बन्धि पय उदकमवेषन् । व्याप्तवन्तः । ववर्षुरित्यर्थः । दिवस्पय इत्यत्र षष्ठ्याः पतिपुत्रेति सत्वम् । दिधिषाणाः । 'धिष धारणे' चानश् , शपः श्लुः । यद्वा - 'धि धारणे ' सनन्तस्य चानश् । 'अज्झनगमां सनि' इति दीर्घाभावश्छान्दसः ॥ यद्वा -समन्तौ सङ्गतौ घर्मौ स्वयं दीप्यमानौ जीवेश्वरौ त्रिवृतं सत्त्वरजस्तमोगुणात्मिकां मायां व्यापतुः । नियन्तृनियन्तव्यभावेन मातरिश्वा परमात्मा तयोर्जुष्टिं सम्भोक्तव्यपदार्थैः सञ्जातां प्रीतिं जगाम । गतवान् । तं परमात्मानं वेदमयमिमं सूर्यमिति देवा जानन्ति ॥ १ ॥

**सत्यसन्धतीर्थकृतव्याख्या – घर्मेति ॥** दशार्चमेतत्सूक्तम् । ''घर्मा सध्रिः तापसो वा घर्मौ वैश्वदेवम् चतुर्थी जगती''[१]॥

**घर्मा**[२] । 'घृ क्षरणदीप्त्योः' इत्यस्मात् मन्प्रत्यये ''सार्वधातुक''

१. सर्वानुक्रमणिकावाक्यमिदम्

२. ब्र.सू.भा --१-२-११ उदाहृतम् । टीका -दीप्तौ व्याप्तौ भगवन्तौ तेजोबन्नात्मकं शरीरं विशेषेण गुहास्थाने प्राप्तौ । तयोः सेवां कर्तुं मातरिश्वा अपि त्रिवृतं जगाम'

(पा.सू.७-३-८४)इति गुणे, औकारस्याकारदेशे च **घर्मौ** दीप्तौ **समन्ता** लग्नाः अन्ताः दिगन्ताः याभ्यां तौ **समना** सम्पूर्वात् 'अम गतौ' इत्यस्मात् औणादिक्तप्रत्यये,सम्पूर्वात् 'अत सातत्यगमने' इत्यस्माद्वा पचाद्यचि अन्ते छान्दसे नुमागमे च रूपम् ।। आकारादेशः । व्याप्तौ आत्मान्तरात्मानौ **त्रिवृतं** तेजोबन्नात्मकं शरीरं **व्यापतुः** विशेषेणापतुः । **तयोः** भगवद्रूपयोः **जुष्टिं** 'जुषी प्रीतिसेवनयोः'इत्यस्मात् क्तिनि ''आर्धधातुकस्येड् वलादेः'' (पा.सू.७-२-३५) इति प्रसक्तस्येडागमस्य ' मतिव्रुतथसुसकरसेषु च' इति निषेधे रूपम् । सेवां कर्तुं । मातरि वेदादिप्रमाणे श्वयते गच्छतीति **मातरिश्वा**[1] वायुः । 'श्वन्नुक्षन् -पूषन् -प्लीहन्-क्लेदन् -स्नेहन् -मूर्धन्-मज्जन् -अर्यमन् - विश्वप्सन् - मातरिश्वन्- मघवन्'(उणादि.१-१५७) इति निपातनात् साधुः ।। **आ जगाम** प्राप । ये **देवाः दिवः** भारत्याः **पयः, (अवेषन्)** ''षष्ठ्याः पति-पुत्र-(पृष्ठ)पद-पयस्-पोषेषु''(पा.सू.८-३-५३) इति च्लेरङि,लुङः स्यादेशे संयोगान्तलोपे आडागमे 'नञा निर्दिष्टमनित्यम्' ''क्ङिति च'' (पा.सू. ७-२-११८) इति गुणनिषेधाभावे च रूपम् । व्याप्तवन्तः तत्पुत्राः इति यावत् । **दिधिषणाः** 'धिषु धारणे' इत्यस्मात् शपः

---

इति द्विरूपतया हरेः शरीरे स्थित्युक्तेर्युक्तं रूपद्वयाभिप्रायेण द्विवचनम् । 'घर्मौ' दीप्तौ घर्षकौ सङ्कोचकाविति वा । 'घर्षणात् सर्वलोकस्य नृसिंहो घर्म उच्यते' इत्यैतरेयभाष्योक्तेः । 'घृष्टत्वेन घर्षकत्वेन च मितौ' इति तत्वप्रदीपोक्तेश्च ।'समन्ता' समन्तौ व्याप्तौ प्रकृतिपुरुषकालव्यापिनौ । देशतः कालतः शक्तितश्च सम्पूर्णौ यौ भगवन्तौ 'त्रिवृतं' तेजोबन्नात्मकं शरीरं 'व्यापतुः' विशेषेणापतुः देहहृदयगुहास्थानं प्राप्तौ । । तयोः 'जुष्टिं' सेवां कर्तुं 'मातरिश्वा' मुख्यवायुरपि त्रिवृतं जगाम । 'दिवः' देव्या वायुपत्न्याः स्तन्यं 'पयः' 'दिधिषाणाः' पिपासन्तः देवाः द्विरूपं तमेकं 'अवेषन्' अन्वैषन् । तम् 'अर्कम्' अरं अलं कम् सुखरूपं 'सह सामानं' सह वायुं विदुः'इतिश्रुत्यर्थः ।। (भाष्यदीपिका)

१. 'मातरि अन्तरिक्षे श्वसति, मातर्याश्वनितीति वा' इति निरुक्ते ७-२६.

"श्लौ"(पा.सू. ६-१-१०) इति द्वित्वे "अभ्यासे चर्च" (पा.सू. ८-४-५४ ) इति जस्त्वे चानशि लोकधारणशीलाः । अथवा 'धि धारणे' इत्यस्मात् सन्नन्तात् चानशि "अज्झनगमां सनि" (पा.सू.६-४-१६)इति प्राप्तस्य दीर्घस्य छान्दसत्वादभावे लोकधारणेच्छव इत्यर्थः । ते देवाः **सह सामानं** सामशब्दोपलक्षितसर्ववेदसहितम् । साहित्यं च अथवा -

'सेति भार्या हि वाग्देवी प्राणो मः पतिरीरितः ।
एवं तौ सामनामानावुभावेवाप्युदाहृतौ' (छा.उ.भा)

इति छान्दोग्यभाष्योक्तेः । **सहसामानं** भारतीवायुभ्यां सहितम् **अर्कम्** अरकम् अतिसुखं द्विरूपं विष्णुं **विदुः** । अभ्यासलोपश्छान्दसः । सेवार्थं प्राप्तवन्तः ॥ १ ॥

## ಘರ್ಮಸೂಕ್ತಾರ್ಥ

ಪ್ರತಿಪದಾರ್ಥ :-೧. ಘರ್ಮಾ = ಪ್ರಕಾಶಮಾನವಾದ, ಸಮಂತಾ = ಎಲ್ಲೆಡೆ ವ್ಯಾಪಿಸಿರುವ ಆತ್ಮಾ , ಅಂತರಾತ್ಮಾ ಎಂಬ ಭಗವಂತನ ಎರಡು ರೂಪಗಳು ತ್ರಿವೃತಮ್ = ಪೃಥಿವೀ, ಅಪ್, ತೇಜಸ್ ಎಂಬ ಭೂತತ್ರಯಾತ್ಮಕವಾದ ಶರೀರವನ್ನು, ವ್ಯಾಪತುಃ = ವಿಶೇಷವಾಗಿ ಹೊಂದಿರುವವು, ತಯೋಃ = ಆ ಎರಡು ಭಗವದ್ರೂಪಗಳ ಜುಷ್ಟಿಮ್ = ಸೇವೆಯನ್ನು ಮಾಡಲು, ಮಾತರಿಶ್ವಾ = ವಾಯುದೇವರು, ಆ ಜಗಾಮ = ಬಂದರು. ದೇವಾಃ = ಯಾವ ದೇವತೆಗಳು, ದಿವಃ = ಭಾರತೀದೇವಿಯರ, ಪಯಃ = ಸ್ತನ್ಯವನ್ನು, ಅವೇಷನ್ = ಪಾನಮಾಡುವರೋ, ಅಂತಹ ಭಾರತೀದೇವಿಯ ಪುತ್ರರಾದ ದಿಧಿಷಣಾಃ = ಲೋಕವನ್ನು ಧಾರಣೆ ಮಾಡುವಲ್ಲಿ ಸಮರ್ಥರಾದ ದೇವತೆಗಳು, ಸಹ ಸಾಮಾನಮ್ = ಭಾರತೀದೇವಿ ಹಾಗೂ ವಾಯುದೇವರಿಂದ ಸಹಿತನಾದ ಅರ್ಕಮ್ = ಅತ್ಯಂತಸುಖರೂಪನಾದ ದ್ವಿರೂಪಿಯಾದ ಭಗವಂತನನ್ನು ವಿದುಃ = ಸೇವೆ ಮಾಡಲು ಬಂದರು.

# Gharma Sukta

The Aatmaa and the Antaraatma forms of the bright and refulgent Lord, which pervade all Space take on a body constituted of Prithivi, Aapah and Tejas. To serve the two forms of the Lord (dwelling in the body), god Vayu enters the body. The deities who control the several activities in the world, by virtue of the powers acquired from (by sucking the breast-milk of their mother) Bharati, join their parents, Vayu and Bharati, in serving the Lord in these two forms.

**संहिता – तिस्रो देष्ट्राय निर्ऋतीरुपासते**
**दीर्घश्रुतो वि हि जानन्ति वह्नयः ।**
**तासां निचिक्युः कवयो निदानं**
**परेषु या गुह्येषु व्रतेषु ॥ २ ॥**

पदपाठः – **तिस्रः[१] । देष्ट्रायं । निःऽऋतीः । उप । आसते । दीर्घश्रुतः । वि । हि । जानन्ति । वह्नयः । तासां । नि । चिक्युः । कवयः । निऽदानम् । परेषु । याः । गुह्येषु । व्रतेषु ॥२॥** **(एकोनविंशतिपदानि)**

**सायणभाष्यम्** - २ निर्ऋतीः । पृथिवीनामैतत् । अनेनेतर-लोकावुपलक्ष्येते । तत्राधिष्ठितास्तिस्रोऽग्न्यादिदेवता देष्ट्राय हविषां प्रदानायोपासते । यजमाना उपासनं कुर्वते । ततो दीर्घश्रुतः प्रभूतकीर्तयो वह्नयो जगतः प्रापिकास्ता देवता वि जानन्ति । एतैः कृतामुपासनां मन्वत एव । यद्वा । निर्ऋतिः । निःशेषेणर्च्छन्ति गच्छन्तीति निर्ऋतयः । तास्तिस्रः सृष्टिस्थितिसंहृतीर्देष्ट्रायात्मनः कर्मभोगदानायोपासते ते दीर्घश्रुतो दीर्घं संसारे श्रुण्वन्तो

१. 'तिसृभ्यो जसः' ६-१-१६६ इति सूत्रम्

मन्तव्यद्दश्यादिपदार्थं जानन्तः । मन्त्रदृष्ट्यादिरूपमजानन्त इत्यर्थः । अत एव वह्नयः संसारस्य वोढारस्ता न जानन्ति । कवयः क्रान्तदर्शिनस्तु तासां सृष्ट्यादीनामग्न्यादीनां वा निदानं मूलकारणं परमात्मानं नि चिक्युः । नितरां चिन्वन्ति जानन्ति । परेष्वुत्कृष्टेषु वा गुह्येषु वा गोप्तव्येषु कर्मसु यमनियमादिषु व्रतेषु याः प्रवृत्तयः सन्ति तासां निदनां चिक्युः । जानन्ति । चिञ् चयने । 'लिटि विभाषां चेः' इत्यभ्यासादुत्तरस्य कवर्णादेशः । यद्वा - चायतेर्लिटि 'चायः की '( पा. ६-१-३५) इति च्छन्दसि कीत्यादेशः ॥२॥

**व्याख्या – तिस्र इति ॥ दीर्घश्रुतः** बहुश्रवणकर्तारः **वह्नयः** 'वह्निश्रुयुश्रिद्रुग्लाहात्वरिभ्यो नित्' (उणादि.४-५१) इति हेर्निः । जगद्वाहकाः देवाः **परेषु** उत्कृष्टेषु **गुह्येषु व्रतेषु देष्ट्राय** स्वेभ्यः फलदानार्थं याः **निर्ऋतीः** निः निश्शेषेण ऋघन्ति गच्छतीति **निर्ऋतीः** सर्वज्ञाः **तिस्रः** श्रीभूदुर्गाख्यारमामूर्तीः **उपासते** विजानन्ति च **तासां** रमामूर्तीनां **निदानं** कारणं ब्रह्म **कवयः** 'कु शब्दे' इत्यस्माद्धातोः ''अच इः''(उणादि ४-१३९) इति इप्रत्यये गुणावादेशयोश्च निष्पन्नस्य 'कवयः' इत्यस्य विष्णुस्तुतिकर्तारो विरिञ्चादय इत्यर्थः । **निचिक्युः** ''चायन् निशामनप्लवनयोः' इत्यस्मात् लिटि ''चायःकी''(पा.सू.६-१-३५) इति छन्दसि कीत्यादेशो नितरामानर्चुः ददृशुर्वा ॥२ ॥

ಪ್ರತಿಪದಾರ್ಥ :-೨. ದೀರ್ಘಶ್ರುತಃ = ಬಹುಶ್ರವಣವುಳ್ಳ, ವಹ್ನಯಃ = ಜಗತ್ತನ್ನು ಧರಿಸಿರುವ ಯಾವ ದೇವತೆಗಳು, ಪರೇಷು = ಉತ್ಕೃಷ್ಟವಾದ ಗುಹ್ಯೇಷು = ರಹಸ್ಯವಾದ ವ್ರತೇಷು = ವ್ರತಗಳಲ್ಲಿ ದೇಷ್ಟ್ರಾಯ = ತಮಗೆ ಫಲ ನೀಡಲು ಉದ್ಯುಕ್ತವಾದ, ನಿರ್ಋತೀಃ = ಸರ್ವಜ್ಞರಾದ, ತಿಸ್ರಃ = ಶ್ರೀ, ಭೂ,ದುರ್ಗಾ ಎಂಬ ರಮಾದೇವಿಯ ಮೂರು ರೂಪಗಳನ್ನು, ಉಪಾಸತೇ = ಉಪಾಸನೆ ಮಾಡುತ್ತಾರೋ ಹಾಗೂ ವಿಜಾನಂತಿ = ತಿಳಿಯುತ್ತಾರೋ, ತಾಸಾಮ್ = ಅಂತಹ ರಮಾದೇವಿಯ ಮೂರ್ತಿಗಳಿಗೂ, ನಿದಾನಮ್ = ಕಾರಣನಾದ ಭಗವಂತನನ್ನು,

ಕವಯಃ = ಜ್ಞಾನಿಗಳಾದ ಭಗವಂತನ ಸ್ತೋತ್ರ ಮಾಡುವ ಬ್ರಹ್ಮಾದಿದೇವತೆಗಳು, ವಿಚಿಕ್ಯುಃ = ಚೆನ್ನಾಗಿ ಅರ್ಚನೆ ಮಾಡುತ್ತಾರೆ.

2. The most knowledgeable Brahma and other deities who are conversant with God, (and His qualities) worship mother Lakshmi in her three forms, Sree, Bhoo and Durga by the most austere of vows and penances. Knowing that these three forms of Lakshmi, are blessed by the Lord;. Brahma and the other Deities worship these forms, and the Lord with the greatest of devotion. (These three forms of mother Lakshmi are ever-ready to bless the deities to fulfill their desires)

**संहिता – चतुंष्कपर्दा युवतिः सुपेशाा**
**घृतप्रंतीका वयुनांनि वस्ते ।**
**तस्यां सुपर्णा वृषंणा निषेंदतु-**
**र्यत्रं देवा दंधिरे भांगदेयंम् ॥ ३ ॥** [1]

**पदपाठः – चतुंः ऽ कपर्दा । युवतिः । सुऽपेशाः ।**
**घृतऽप्रंतीका । वयुनांनि । वस्ते । तस्यां । सुऽपर्णा ।**
**वृषंणा । नि । सेदतुः । यत्रं । देवाः । दधिरे । भाग**
**ऽदेयंम् ॥ (पञ्चदशपदानि)**

**सायणभाष्यम्** -३ चतुष्कपर्दा चतुष्कोणा युवतिः स्त्रीरूपा सुपेशा शोभनालङ्कारा घृतप्रतीका घृतप्रमुखहविष्वैतद्दशी वा दिर्वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते ।

---

१. काठकसंहितायां समाख्या ऋक् श्रूयते -
"चतुःशिखण्डा युवतिः सुपत्नी विनीयमाना महते सौभगाय ।
घृतं दुहानादितिर्जनाय सा मे धुक्ष्व सर्वान् भूतिकामान्" ३१-४२ ॥
– तैत्तरीयब्राह्मणे -१-२-१-२७, ३-७-६-५, ७-१४ .....

आच्छादयति । तस्यां वेद्यां वृषणा वृषणौ हविषां वर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती यजमानब्रह्माणौ वा निषेदतुः । निषण्णौ भवतः । यत्र यस्यां वेद्यां देवा अग्न्यादयो भागदेयम् । स्वार्थिको देयप्रत्ययः । स्वस्वभागं हविर्दधिरे । धारयन्ति ॥ यद्वा । चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीया यस्याः सा युवतिस्तरुणी नित्या घृतप्रतीका दीप्यमानवर्णावयवैषौपनिषदी वाग्वयुनानि ज्ञानानि वस्ते । आच्छदयति । तस्या वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ निषण्णौ भवतः । यत्र । 'इतरेभ्योऽपि दृश्यते' इति तृतीयार्थे त्रल्प्रत्ययः । यया वाचा देवा भागं धारयन्ति ॥ ३ ॥

**व्याख्या–** [१]श्रीदेव्याः नित्ययौवन-ज्ञानमयत्व-सर्वपूज्यत्वरूपमाहात्म्य-मुच्यते – **चतुष्कपर्देति** । चत्वारः कपर्दाः जटाजूटशब्दिताः शिखण्डाः यस्याः सा तथोक्ता । वेणीचतुष्टयशालिनीत्यर्थः । यद्यपि 'कपर्दोऽस्य जटाजूटः' इत्यमरे पिनाकिजटाबन्धपरं कपर्दशब्दमाचष्ट । तथापि 'कपर्दस्तु जटाजूटे देवदेवस्य शूलिनः' इत्युक्त्वा 'दृश्यते च जटाजूटमात्रे' इति केशवः जटाजूटमपि कपर्दशब्दार्थमाहेति नानुपपत्तिः । **युवतिः** नित्ययौवना । **सुपेशा** सुरूपा । 'पेशो रूपे हिरण्ये च' इति केशवः । 'मृदुपिण्डश्च पेशः स्यात्' इति वचनात् सुकुमारतरशरीरा वा । **घृतप्रतीका**[२] दीप्ताङ्गी । 'स्निग्धदेहा' इत्यप्याहुः । **वयुनानि**[३] ज्ञानानि । **वस्ते** आच्छादयति । 'वस

---

१. "सुपेशा सुरूपा । घृतप्रतीका दीपाङ्गी । वयुनानि ज्ञानानि वस्ते आच्छादयति । ज्ञानालङ्कृता इति यावत् । सुपर्णा सुष्ठु परमानन्दौ वृषणा सेचकौ द्विरूपो भगवानेव । यत्र यस्यां विषये । अत्र नित्ययौवनं ज्ञानमयत्वं सर्वदेवतापूज्यत्वं च प्रतीयते"
**इति गीताभाष्यटीकायाम् -११ -२**

२. 'घृतप्रतीकां तां नित्यं घृतपूर्णान्नदायिनीम्'इति **श्रीश्रीशगुणदर्पणे** ।

३. (१)'माया वयुनं ज्ञानम्' इति **गीताभाष्ये १२-२** ।

(२) **ईशावास्ये१८ मन्त्रभाष्ये** - 'वयुनं ज्ञानम् । त्व(य)द्दत्तया वयुनयेद

आच्छादने' इति धातोः । ज्ञानालङ्कृतेति यावत् । **यत्र** यस्यां विषये **देवाः भागदेयं** कर्म **दधिरे** समर्पितवन्तः । **तस्यां सुपर्णा** द्विवचनस्य 'सुपां सुलुक्' इत्यादिना आकारादेशः । सुष्टु परमानन्दा । पृषोदरादिभावेन परशब्दान्त्यलोपः । 'णो हि निर्वृतिवाचकः' **वृषणा** 'वृष सेचने' इति धातोः ''कनिन् युवृषितक्षिराजिधन्विद्युप्रति दिवः''(उणादि.१-१५६)इत्यौणादिके कनिन्प्रत्यये, तस्य कित्वाद्गुणाभावे वा षपूर्वस्य निगमे षपूर्वस्य ''नो उपधायाः''(पा.सू.-६-४-७) इति विकल्पितत्वात् ''सर्वनामस्थाने चा-सम्बुद्धौ'' (पा.सू.६-४-८)इति प्रसक्तदीर्घाभवे ''कृपूवृजिमन्दिनिधाञः क्युः''(उणादि.२-८१) इत्यत्र 'क्युः' इति योगविभागात् वृषेः क्युप्रत्यये नस्य अनादेशो,नस्य णत्वे वा निष्पन्नवृषणशब्दप्रथमाद्विवचनस्याकारादेशो **वृषणौ**, सेचकौ सर्वाभीष्टानां वर्षितारावित्यर्थः । **निषेदतुः** निषण्णौ बभूवतुः । द्विरूपभगवतो रमणपात्रं रमेति भावः ॥ ३ ॥

ಪ್ರತಿಪದಾರ್ಥ :-೩. ಚತುಷ್ಕಪರ್ದಾ = ನಾಲ್ಕು ಜಡೆಗಳನ್ನು ಹೆಣೆದು ಕೊಂಡಿರುವ, ಯುವತಿಃ = ನಿತ್ಯ ಯೌವನ ಸಂಪನ್ನೆಯಾದ, ಸುಪೇಶಾ = ಸುಕುಮಾರಿಯಾದ, ಘೃತಪ್ರತೀಕಾ = ಪ್ರಕಾಶಮಾನವಾದ ಅಂಗಗಳುಳ್ಳ ಲಕ್ಷ್ಮೀದೇವಿಯು, ವಯುನಾನಿ = ಜ್ಞಾನವನ್ನು, ವಸ್ತೇ = ಆಭರಣದಂತೆ ಧರಿಸಿದ್ದಾಳೆ. ಯತ್ರ= ಯಾವ ಲಕ್ಷ್ಮೀದೇವಿಯಲ್ಲಿ ದೇವಾಃ = ದೇವತೆಗಳು ಭಾಗದೇಯಂ=ಸ್ವವಿಹಿತವಾದ ಕರ್ಮವನ್ನು, ದಧಿರೇ = ಸಮರ್ಪಣೆಮಾಡುವರೋ, ತಸ್ಯಾಮ್ = ಅಂತಹ ಲಕ್ಷ್ಮೀದೇವಿಯಲ್ಲಿ, ಸುಪರ್ಣಾ = ಉತ್ತಮ ಆನಂದಪೂರ್ಣವಾದ, ವೃಷಣಾ = ಭಕ್ತರ ಅಭೀಷ್ಟವನ್ನು, ಸುರಿಸುವ ಭಗವಂತನ ಎರಡು ರೂಪಗಳು, ನಿಷೇದತುಃ = ರಮಣಮಾಡುತ್ತವೆ.

3. And the most exquisitely beautiful Lakshmi Devi, ever

---

मचष्टविश्वम्' (भाग.४-१०-८)इति वचनात् ॥
(३)- ''केतुः । केर्तः । चेर्तः । चित्तम् । क्रतुः । असुः । धीः । शची । माया । वयुनं (ज्ञानम् ) अभिख्या' इति एकादशप्रज्ञानमानि'' इति वैदिकनिघण्टौ -३-९

youthful and enchanting, with her four braids (indicative of her eternal youth) wears knowledge as an ornament. And to her all gods dedicate their duties. And in her, the Lord, who ever fulfills the virtuous and delightful desires of His devotees finds enjoyment in His two forms.

**संहिता – एकः सुपर्णः स समुद्रमा विवेश**
**स इदं विश्वं भुवनं वि चष्टे ।**
**तं पाकेन मनसा पश्यमन्तित-**
**स्तं माता रेळ्हि स उं रेळ्हि मातरम् ॥ ४ ॥**[1]

**पदपाठः – एकः**[2] **। सुऽपर्णः । सः । समुद्रम् । आ । विवेश ।**
**सः । इदम् । विश्वम् । भुवनम् । वि । चष्टे ।**
**तम् । पाकेन । मनसा । अपश्यम् । अन्तितः**[3] **।**
**तम् । माता । रेळ्हि । सः । ऊं इति । रेळ्हि ।**
**मातरम् ॥४॥ (चतुर्विंशतिपदानि)**

**सायणभाष्यम्** - ४ एकः सर्वकार्येष्वसहायः सुपर्णः सुपतनो मध्यमस्थानो देवः समुद्रमन्तरिक्षमा विवेश । आविश्य च स इदं विश्वं सर्वं भुवनं भूजातं विचष्टे । अनुग्राह्यतया अभिपश्यति । तमेवंरूपं देवं पाकेन परिपक्वेन मनसा अन्तितः समीपेऽहमपश्यं । अदर्शं । किञ्च मातोदकानां निर्मात्री माध्यामिका वाक् तां रेळिह ।

---

१. ''एकःसुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसा पश्यमन्तित इत्युषेदर्दृष्टारस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेढि वागेषा माध्यमिका स उ मातरं रेढि ॥'' निरुक्ते (१०-४६)

२. 'इण् गतौ' 'इण् भीकापाशल्यतिमर्चभ्यः कन्' (उणादि ३-३२३) इति कन् । बाहुलकात् कलोपाभावः । नित्वादाद्युदात्तत्वम् ।

३. 'अन्तिकस्य तसि कादिलोपो भवति आद्युदात्तत्वं च (पा.सू.६-४-१४९ ? )

आस्वादयति । उपजीवनमात्रमत्रोपलक्ष्यते । स उ स खलु मातरं वाचं रेळ्हि लेढि । तामेवोपजीवति । 'लिह आस्वादने' । यद्वा । सुपर्णः पक्षवान्निराधारसञ्चर्येकः प्राणवायुः परमात्मा वा समुद्रम् । समुद्द्रवन्त्यापोऽस्मादिति समुद्रमन्तरिक्षम् । यद्वा । समुद्द्रवं सर्वतो गमनम् । तच्छीलं प्रपञ्चजातमाविष्टवान् । 'सृष्ट्वा तदेवानुप्राविशत् '(तै.आ. ८-६ ) इति श्रुतेः । वायुपक्षे वाय्वादिरूपेणाविवेश । स इदं विश्वं सर्वं लोकं विचष्टे । विशेषेण ख्यापयति । सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोकं विख्यातं कुर्वन्ति । तं देवमुपासकोऽहं पाकेन परिपक्वज्ञानेन मनसा अन्तितः ॥ अन्तिकशब्दात्तसिः । अन्तिकस्य तसि कादिलोपो भवत्याद्युदात्तत्वं च ( पा. ६-४-१४९-८) इति कादिलोपः । अन्तिके समीपे स्वहृदयेऽपश्यम् । तं प्राणं माता वाग्रेळ्हि । वाक् प्राणेऽन्तर्भवतीत्यर्थः । स्वापे हि वाग्व्यापारो न दृश्यते प्राणव्यापारस्तु दृश्यत इति ॥ ४ ॥

**व्याख्या –** [१]**एक इति । सः एकः** प्रधानः । ''एको देवः सर्वभूतेषु गूढः'' इत्यत्र तत्वप्रकाशिकायां[२] तथा विवृतेः । एकत्वात् 'ए' । कारयितृत्वात् 'कः' इति वा । ''आद्यक्षरग्रहणेन 'ए'शब्दः एक(स्य)[३] शब्दद्योतकः । 'क' (शब्दः)इति कारयितृत्वद्योतकः । अन्तर्णीतण्यर्थात् करोतेर्डः'' इति 'एकस्त्वमेव कारयिता नान्योऽस्ति' इत्येकादशाध्याय-गीताभाष्य(११-४२)टीकायामुक्तेः । 'एकशब्दोऽयं बह्वर्थः' इति भाष्यात्,

---

१. 'एकः' 'सुपर्णः' सुष्ठु परमानन्दरूपो भगवान् समुद्रमाविवेश । स इदं जगत् 'विचष्टे' पश्यति । 'तं' परमात्मानं पकेन मनसा अहमपश्यम् । तं माता व्यञ्जकत्वात् वाक् सरस्वती 'रेढ्हि' लिह्यत इव । 'सः' परमात्मा मातरं रेढ्हि । तावन्योन्यं सम्बद्धौ भवतः तथाच भगवद्व्यञ्जकवाचो अपि तद्व्यङ्ग्यत्वमिति भावः ॥ (ब्र.सू.भाष्यदीपिका)

२. ब्र.सू.भा .१-१-१० टीका

३. **कंसान्तर्गतो भागः टीकागतः । मातृकास्थो न व्यत्यस्तः ।**

"मुख्यासहायप्रधानप्रथमसमानार्थ" इति कैय्यटवचनाच्चानेकार्थता युक्ता । **सुपर्णः** सुष्ठु परानन्दरूपः[१] । लक्ष्मीरमणः **समुद्रम् आ विवेश** क्षीरसमुद्रं प्रविवेश[२] । **स इदं विश्वं** भुवनं "भूसूधूभूस्जिभ्यश्छन्दसि" (उणादि.२-८०) इति क्युन् । **विचष्टे** पश्यति । **तं पाकेन** 'अर्श आदिभ्यो अच्' । परिपाकवता मनसा । **अन्तितः** समीपे **अपश्यं** पश्यामि तं माता वाक् **रेळ्हि** समानतरं रेळ्हि । **उ** रेळ्हीव ॥

"एक एव च विष्णुः स प्रविष्टः क्षीरसागरम् ।
सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।
परिपक्वेन मनसा पश्यमित्याह तं त्वजः ॥
मातेव व्यञ्जकत्वात्तं प्राणस्थं वाक् सरस्वती ।
लिहते लिह्यत इव प्राणस्थेन तु सा सदा ।
स्वयं तु भगवान् विष्णुः वाक्पतेः ब्रह्मणो ऽपि हि ।
नित्यः पिता स्वतन्त्रश्च नास्य माता पितापि वा"[३]इत्युक्तेः ।
( ऐ.भा.उ .ऋग्वेदसंहितावचनम् )॥ ४ ॥

ಪ್ರತಿಪದಾರ್ಥ : -೪. ಸಃ = ಹಿಂದಿನ ಮಂತ್ರದಲ್ಲಿ ಪ್ರಸ್ತುತನಾದ , ಏಕಃ = ಪ್ರಧಾನನಾದ, ಸುಪರ್ಣಃ = ಪರಮಾನಂದರೂಪನಾದ ಭಗವಂತನು, ಸಮುದ್ರಮ್ = ಕ್ಷೀರ ಸಮುದ್ರವನ್ನು, ಆ ವಿವೇಶ = ಪ್ರವೇಶ ಮಾಡಿದನು. ಸಃ =

---

१. 'सुपर्णः सुपरानन्दात् काकुस्थो वाचि संस्थितेः' इति भागवततात्पर्ये ।

२. ऋग्भाष्ये- १-१९-७ मन्त्रे समुद्रशब्दो समुद्रेकहेतुना प्रकृतिवाचक इति व्याख्यातः । तेनात्र 'भगवान् प्रकृतिमाविवेश'इत्यप्यर्थः 'तत्सृष्ट्वा तदेवानु प्राविशत्' इति श्रुतेरनुमीयते ।

३. इतः पूर्वं भाष्ये -
'चतुःशिखण्डां तु रमां द्विरूपो भगवान् हरिः ।
परमानन्दरूपत्वात् सुपर्ण इति नामकः ।
रमयामास तस्यां च निषण्णः सर्वदैव सः ।' इति सार्धश्लोकः दृश्यते ।

ಆ ಕ್ಷೀರ ಸಮುದ್ರಸ್ಥನಾದ ಭಗವಂತನು, ಇದಮ್ = ಈ ವಿಶ್ವಮ್ = ಸಮಸ್ತವಾದ ಭುವನಮ್ = ಜಗತ್ತನ್ನು, ವಿಚಷ್ಟೇ = [ಸ್ವಭಾವಸಿದ್ಧ ಪ್ರಜ್ಞೆಯಿಂದ] ನೋಡುತ್ತಾನೆ, ತಮ್ = ಆ ಕ್ಷೀರಸಾಗರದಲ್ಲಿರುವ ಸರ್ವಜ್ಞನಾದ ಭಗವಂತನನ್ನು, ಪಾಕೇನ = ಪರಿಪಕ್ವವಾದ, ಮನಸಾ = ಮನಸ್ಸಿನಿಂದ, ಅಂತಿತಃ = ಸಮೀಪದಲ್ಲಿ, ಅಪಶ್ಯಮ್ = ಕಂಡೆನು, [ಇಂದು ಮಂತ್ರದ್ರಷ್ಟ್ರವಾದ [ಬ್ರಹ್ಮದೇವರು] ಋಷಿಗಳ ಮಾತು. ] ಮಾತಾ = ಭಗವಂತನನ್ನು ವೇದವಾಕ್ಯದ ಮುಖಾಂತರ ವ್ಯಂಜನೆ ಮಾಡುವುದರಿಂದ ತಾಯಿಯಂತೆ ಇರುವ, ವಾಕ್= ಸರಸ್ವತಿಯು ರೇಳ್ಹಿ = ಪ್ರಾಣಾಂತರ್ಗತ ಭಗವಂತನನ್ನು ಪ್ರತಿಪಾದಿಸುವುವ ಮೂಲಕ ಆಸ್ವಾದಿಸುತ್ತಾರೆ, ಸಃ = ಪ್ರಾಣಸ್ಥನಾದ ವಿಷ್ಣುವು ಮಾತರಮ್ = ವಾಗ್ದೇವಿಯಾದ ಸರಸ್ವತಿಯನ್ನು ರೇಳ್ಹಿ = ಆಸ್ವಾದನೆ ಮಾಡುವಂತೆ [ಮಗುವು ತಾಯಿಯನ್ನೆಂಬಂತೆ] ಇದ್ದಾನೆ, ಭಗವಂತನಿಗೆ ಯಾರೂ ತಾಯಿಯಿಲ್ಲ ಎಂದು ಭಾವ.

4.. The Lord (referred to in the previous hymn) entered the Milky Ocean and saw the world in its entirety. (Chaturmukha Brahma, the Seer of these Hymns said ""I have seen Him from close quarters.") The Lord is like the 'universal Mother' as Vedas are expressed through Him. And Saraswathi who clothes Him, (in the form of the Vedas,) for general presentation, is like a mother to Him. And the Lord fondles Saraswathi as a child would fondle the mother. Thus is indicated the fact that the Lord has no mother (and never had one.)

**संहिता – सुपर्णं विप्राः कवयो वचोभि-**
**रेकं सन्तं बहुधा कल्पयन्ति ।**
**छन्दांसि च दधतो अध्वरेषु**
**ग्रहान् सोमस्य मिमते द्वादश ॥५॥[१] षोडशो वर्गः**

१. (१)''ग्रहाः सोमस्य'इत्यत्र सोमस्य सोमरसस्य वा ग्रहाः 'द्विषड्गृहीतेन च सस्रवत्या'इतिवचनात् पूर्णाहुतिदानाय स्रुवेण स्रुचि क्रियमाणाः द्वादशवारं सङ्ग्रहाः ।

**पदपाठः –** **सु ऽपर्णम् । विप्राः । कवयः । वचःऽभिः । एकम् । सन्तम् । बहुधा । कल्पयन्ति । छन्दांसि । च । दधतः । अध्वरेषु । ग्रहान् । सोमस्य । मिमते । द्वादश[1] ॥५॥** **(षोडशपदानि)**

**सायणभाष्यम्** - ५ विप्रा मेधाविनः कवयः क्रान्तप्रज्ञा मनुष्याः सुपर्णं सुपतनमेकं सन्तं परमात्मानं वचोभिः स्तुतिलक्ष्यर्वचनैर्बहुधा बहुप्रकारं कल्पयन्ति कुर्वन्ति । किञ्च त एव कवयोऽध्वरेषु यज्ञेषु च्छन्दांसि गायत्र्यादीनि सप्त च्छन्दांसि दधतः स्तोत्रशस्त्रादिना धारयन्तो द्वादशसङ्ख्याकान्सोमस्य ग्रहान् ग्रहणसाधनानि पात्राण्युपांश्वन्तर्यामादीनि मिमते । निर्मिमते । ग्रहान् । गृह्यत

---

'ग्रहान् सोमस्य मिमते द्वादश' इति श्रुतेः । अन्यथा ग्रहाणां नवसङ्ख्याकत्वेन वाक्यराथायोगादिति भावः ॥'' **गुर्वर्थदीपिकायाम्** ॥

(२) ''ज्योतिष्टेमे हि -उपांशुमत्पूर्णमैन्द्रवायवमैत्रावरुणाश्विनाः पञ्च, शुक्रामन्थिनौ द्वौ क्रतुपात्रे अतिग्राह्याः श्रुत इति सोमग्रहाः द्वादश । यद्यप्यंशद्वाल्भ्यावपि ग्रहौ स्तः । तथापि तयोरनित्यत्वात्साधनोपस्थापनाद्यभावाच्च नित्यसाधनयुक्तग्रहविवक्षया द्वादशत्वमिति ज्ञातव्यम् ॥ तथाच श्रुतिः - 'अध्वरेषु ग्रहान्सोमस्य मिमते द्वादश' इति'' **वाक्यार्थमुक्तावली** ॥

(३) 'सोमस्य ग्रहाः सोमरसग्रहणार्थाः पात्रविशेषाः' तात्पर्यचन्द्रिका (२-२-६) **प्रकाशः** -''पात्रविशेषाः उलूखलाकाराः । ''अग्निर्देवतेत्युपांशु पात्रमासादयति । सोमो देवतेत्युत्तरमन्तर्यामस्य । तं परेण द्विदैवत्यपात्राणि । इन्द्रो देवतेत्यैन्द्रवयवस्य । बृहस्पतिर्देवतेति मैत्रावरुणस्य अश्विनौ देवतेत्याश्विनस्य । तान्यपरेण शुक्रामन्थिनोः पात्रे । ते अपरेण ऋतुपात्रे । स्थाल्यावन्तरेण त्रीण्युदञ्चति ग्राह्यपात्राणि । आग्रेयमैन्द्रं सौर्यम्'' पात्राणामासादनक्रमोक्ति ..'' ॥ **तत्वप्रदीपे** ''षड्तुनेति यजन्ति । प्राणमेव तद्यजमाने दधति । चत्वारि ऋतुभिरित्यपानमेवतद्यजमाने दधति । द्व्यर्तुनेत्युपरिष्ठात्'' इति वाक्यमुदाहृतम् । तेन तत्वप्रदीपिकाकारैः सोमयागादन्ययागीयार्थाः पात्रविशेषा उक्ता इति भाति ॥

१. ''सङ्ख्या'' (पा.सू. ६-२-३५) इति पूर्वपदप्रकृतिस्वरत्वम् ।

एभिरिति ग्रहाः । 'ग्रहवृद्दनिश्चिगमश्च' इति करणेऽप्प्रत्ययः । सोमस्येति कर्मणि षष्ठी । द्वादशेत्यत्र 'सङ्ख्या'(पा ६-९-३५) इति पूर्वपदप्रकृतिस्वरत्वम् ॥ ५ ॥

**व्याख्या – सुपर्णमिति । कवयः** विप्राः **सुपर्णं** सुष्ठु परमानन्दरूपं परश्चासौ णश्चेति कर्मधारये,पृषोदरादित्वात् परशब्दान्तपलोपे च रूपम् ॥ विष्णुम् **एकं सन्तं वचोभिः** (ऋतु)शब्दैरेव **बहुधा** केशवादिद्वादशधा स्थितं **कल्पयन्ति** । किञ्च **द्वादश**धा स्थितं तं प्रति **अध्वरेषु छन्दांसि** मन्त्रान् **दधतः** दधानाः **सोमस्य ग्रहान् मिमते** मिर्मिमते ॥[१] उक्तं **चेत्थमृग्भाष्ये** (१-१५-१२)-

विष्णुर्वत्वधिपो विष्णुः केशवादिस्वरूपतः ।
ग्रहान् सोमस्य मिमते इति तस्यैव कथ्यते'' इति ॥ ५ ॥[२]

ಪ್ರತಿಪದಾರ್ಥ :- ೫. ಕವಯಃ = ಜ್ಞಾನಿಗಳಾದ ವಿಪ್ರಾಃ = ವೇದವಿದ್ವಾಂಸರು, ಸುಪರ್ಣಮ್ = ಉತ್ತಮವಾದ ಆನಂದ ರೂಪನಾದ ಭಗವಂತನನ್ನು, ಏಕಂ ಸಂತಮ್ = ಒಬ್ಬನನ್ನೇ ವಚೋಭಿಃ = ವಸಂತಾದಿಋತುವಾಚಕಶಬ್ದಗಳಿಂದ, ಬಹುಧಾ = ಕೇವಶವಾದಿ ದ್ವಾದಶ ವ್ಯೂಹರೂಪನನ್ನಾಗಿ, ಕಲ್ಪಯಂತಿ = ಚಿಂತಿಸುತ್ತಾರೆ, ಹಾಗೆಯೇ ದ್ವಾದಶರೂಪದ ಭಗವಂತನನ್ನು ಕುರಿತು, ಅಧ್ವರೇಷು = ಯಜ್ಞಗಳಲ್ಲಿ, ಛಂದಾಂಸಿ = ವೇದಮಂತ್ರಗಳನ್ನು, ದಧತಃ = ಧಾರಣೆ ಮಾಡುವವರಾಗಿ, ಸೋಮಸ್ಯ ಗ್ರಹಾನ್ = ಸೋಮರಸದ ಗ್ರಹಣ ಪಾತ್ರೆಗಳನ್ನು, ಮಿಮತೇ = ನಿರ್ಮಾಣಮಾಡುತ್ತಾರೆ.

5. The great knowledgeable seers of Vedas visualize the

१. ब्र.सू.भाष्यदीपिका --तमेव सुपर्णमेकं सन्तं 'विप्राः' विशेषेण प्रकृष्टाः 'कवयः' ज्ञानिनः 'वचोभिः' शब्दैः 'बहुधा' केशवादि-द्वादशधा स्थितं 'कल्पयन्ति' चिन्तयन्तीत्यर्थः । (१-१)
तत्वप्रकाशिकायां(२-४-४) पूर्वपक्षे उदाहृतम् ॥
२. ऋगभाष्यटीकास्थान्येव पदान्यस्यां टीकायां पठितानि

One God in many forms and convey it in several ways. They think of Him as the season of Spring etc;. They visualize Him in several forms like Keshava and like forms. Similarly, visualizing Him in twelve forms, they. sanctify offerings offered to the accompaniment of Vedic hymns at sacrifices,. and create vessels to store Samarasa for Him under various names.

**संहिता -** **षट्त्रिंशांश्चं चतुरः कल्पयंन्त-**
**श्छन्दांसि च दधंत आ द्वादशम् ।**
**यज्ञं विमायं कवयों मनीषा**
**ऋक्सामाभ्यां प्र रथं वर्तयन्ति ॥६॥**

**पदपाठः —षट्ऽ त्रिंशान् । च । चतुरः[१] । कल्पयंन्तः । छन्दांसि । च । दधंतः । आ ऽद्वादशम् । यज्ञम् । विमाऽयं । कवयंः । मनीषा । ऋक् ऽसामाभ्यांम् । प्र । रथंम् । वर्तयन्ति ॥६॥**

**सायणभाष्यम् -** ६ पूर्वां सामान्येन यज्ञग्रहानुक्त्वेदानीं सर्वग्रहादिपूर्वको यज्ञोऽभिधीयते । षट्त्रिंशान् । द्वावुपांश्वन्तर्यामौ । ऐन्द्रवायवादयस्त्रयो द्विदेवत्यग्रहाः । द्वौ शुक्रामन्थिनौ । आग्रयणउक्थ्यो ध्रुवश्चेति त्रयः । ऋतुग्रहा द्वादश । ऐन्द्राग्नो वैश्वदेवश्च द्वौ । त्रयो मरुत्वतीयाः । एको माहेन्द्रः । आदित्यसावित्रौ द्वौ । वैश्वदेवः पात्नीवतो हारियोजन इति त्रयो ग्रहाः । एवं षट्त्रिंशद्भवन्ति । अत्यग्निष्टोमे पूर्वे षट्त्रिंशद्ग्रहा द्वावंश्वदाभ्यौ दधिग्रहः षोडशीति चेति चत्वारः । एतांश्चत्वारिंशत्सङ्ख्या-कान् ग्रहान्कल्पयन्तः सोमेन पूरयन्तः । किञ्चाद्वादशम् । 'आङ्मर्यादा-भिविध्योः '( पा. २-१-१३) इत्यव्ययीभाव समासः । तस्य

१. 'चतुरः शसि' ६-१-१६७ वैदिकप्रक्रियायां स्वरप्रकरणे

स्वरः । द्वादशसङ्ख्याकप्रउगादिशस्त्रसमाप्तिपर्यन्तं छन्दांसि गायत्र्यादीनि दधतः सन्तः शस्त्रादिरूपेण धारयन्तः कवयो मनिषा । तृतीयाया आकारः । मनीषया बुद्ध्यैवं यज्ञं विमाय निर्माय रथम् । रमन्त्यत्रेति रथो यज्ञः । तं रथं यज्ञमृक्सामाभ्यां प्रवर्तयन्ति । प्रकर्षेण सम्पादयन्ति ॥ चतुर इत्यत्र 'चतुरः शसि ' इत्यन्तोदात्तत्वम् ॥ ६ ॥

**व्याख्या – षट्त्रिंशानिति** ॥ **षट्त्रिंशान्** वर्णान् बृहतीगतान् **चतुरश्च** पङ्क्तीवर्णान् । उपलक्षणमेतत् । जगत्यादिवर्णांश्च । **कर्मनिर्णयटीकोक्तप्रकारेण छन्दांसि कल्पयन्तः** गायत्र्यादिभिः संयोजनेन अनुष्टुभः कल्पयन्तः सम्पादयन्तः मनीषा तृतीयायाः 'सुपां सुलुक्' इत्यादिना आकारादेशः । **मनीषया** बुद्ध्या दधतश्च **कवयः आ द्वादशं** द्वादशवर्षमारभ्य **यज्ञं विमाय** यज्ञं कृत्वा **ऋक्सामाभ्याम्** ''अचतुर-विचतुर- सुचतुर- स्त्रीपुंस- धेनु- अनडुह- ऋक्साम- वाङ्मनस- अक्षिभ्रुव-दारगव- ऊर्वष्ठीव -पदष्टीव -नक्तंदिव -रात्रंदिव-अहर्दिव-सरजस-निःश्रेयस-पुरुषायुष-द्व्यायुष-त्र्यायुष-ऋग्यजुष- जातोक्ष - महोक्ष - वृद्धोक्ष- पशुन-गोष्ठश्वाः'' (पा.सू. ५-४-८२) इति निपातनात् साधुः । **रथं** देहं **प्र वर्तयन्ति** । ''छन्दसि परे''**(पा.सू.१-४-८१)** ''व्यवहिताश्च'' **(पा.सू. १-४-८२)** इति 'प्र' इत्यस्य व्यवहितत्वम् ॥ ६ ॥

**ಪ್ರತಿಪದಾರ್ಥ :- ೬. ಷಟ್‌ತ್ರಿಂಶಾನ್** = ಬೃಹತೀ ಛಂದಸ್ಸಿನ ಮೂವತ್ತಾರು ಅಕ್ಷರಗಳನ್ನು, **ಚ** = ಮತ್ತು **ಚತುರಃ** = ಪಂಕ್ತೀಛಂದಸ್ಸಿನ ವರ್ಣಗಳನ್ನೂ ಸಹ **ಛಂದಾಂಸಿ ಕಲ್ಪಯಂತಃ** = ಗಾಯತ್ರೀ ಮೊದಲಾದ ಛಂದಸ್ಸುಗಳೊಂದಿಗೆ ಸಂಯೋಜನೆ ಮಾಡಿ ಅನುಷ್ಟುಪ್ ಮಂತ್ರವನ್ನಾಗಿ ಸಂಪಾದನೆ ಮಾಡಿ, **ಮನೀಷಾ** = ಬುದ್ಧಿಯಿಂದ, **ದಧತಃ** = ಧಾರಣೆ ಮಾಡಿರುವ, **ಕವಯಃ** = ಜ್ಞಾನಿಗಳು, **ಆ ದ್ವಾದಶಮ್** = ಹನ್ನೆರಡು ವರ್ಷ ಪರ್ಯಂತ, **ಯಜ್ಞಮ್ ವಿಮಾಯ** =

ಯಜ್ಞವನ್ನು ಮಾಡಿ, ಋಕ್ಸಾಮಾಭ್ಯಾಮ್ =ಋಗ್ವೇದ ಸಾಮವೇದಗಳಿಂದ ರಥಮ್ = ದೇಹವೆಂಬ ರಥವನ್ನು, ಪ್ರವರ್ತಯಂತಿ = ನಡೆಸುತ್ತಾರೆ.

6 .Mystics proficient in Vedic lore, having mastered the knowledge of the 36-lettered Brihati metre, (Chandas), and the letters of the Pangkti Chandas, by means of their intellect and blending them with Gayatri, use the resulting Anustup metre to perform sacrifices for twelve years and control the chariot that constitutes their body.

**संहिता – चतुर्दशान्ये महिमानो अस्य**
**तं धीरा वाचा प्र णयन्ति सप्त ।**
**आप्रानं तीर्थं क इह प्रवोच-**
**द्येन पथा प्र पिबन्ते सुतस्य ॥७॥**[१]

**पदपाठः – चतुः ऽदश । अन्ये । महिमानः । अस्य । तम् । धीराः । वाचा । प्र । नयन्ति । सप्त । आप्रानम् । तीर्थम् । कः । इह । प्र । वोचत् । येन । पथा । प्र ऽ पिबन्ते । सुतस्य ॥७॥ (विंशतिपदानि)**

**सायणभाष्यम्** – अस्य यज्ञरूपस्य परमात्मनोऽन्ये चतुर्दश चतुर्दसङ्ख्याका महिमानो विभूतयो भवन्ति । तं यज्ञं सप्त सप्तसङ्ख्याका धीरा धीमन्तो होत्रादयो वाचा शस्त्ररूपया प्रणयन्ति । प्रकर्षेण नयन्ति । आप्रानम् । 'आप्लृ व्याप्तौ' ताच्छीलिके चानशि व्यत्ययेन विकरणस्य व्यत्ययः । व्यापनशीलं तीर्थं पापोत्तारणसमर्थं च त्वोलोत्करमध्यदेशमिहास्मिन् यज्ञे कः प्रवोचत् । को वक्ति । न कोऽपीत्यर्थः । येन पथा येन यज्ञमार्गेण सुतस्याभिषुतम् । सोमं प्रपिबन्ते देवा अतिशयेन पिबन्ति । 'पा

१. 'को अद्धा वेद क इह प्रवोचत्' इति समाख्या ऋक् सं -३-५४-५

पाने " पाघ्र'इत्यादिना पिबादेशः । व्यत्ययेनात्मनेपदम् । उपसर्गेण समासः । यद्योगादनिघाते तिङि चोदात्तवतीति गतेर्निघातः ॥७ ॥

**व्याख्या – चतुर्दशेति । चतुर्दश** लोकाभिमानिनो देवाः अन्यदेवाश्च यस्य भगवतः **महिमानः** महिना माहात्म्येन निर्मिताः "महीत्युक्तं हि माहात्म्यं महिमानो हि तन्मिताः । एवं हि महिमाशब्दस्तद्वशत्वं वदत्य(यम्) सौ"[१] इति बृहद्भाष्योक्तेः(५-९-२ उ.महामीमांसावचनम्) । **अस्य** भगवतः **सुतस्य** वायोः **तीर्थं** 'तॄ प्लवनतरणयोः' अस्मात् "पा-तॄ-तुदि-वचि-रिचि-सिचिभ्यस्थक्" **(उणादि.२-७ (दशपादिका -६-३२))** इति सूत्रेण थक्प्रत्यये "ॠत इद्धातोः"**(पा.सू.७-१-१००)** इति इतित्वे, 'र्वोरुपधाया दीर्घ इकः'**(पा.सू.)** इति दीर्घे तीर्थमिति रूपम् ॥ शास्त्रम्[२]। धिया रमन्त इति **धीराः** । ज्ञानिनः सप्त वसिष्टादिब्रह्मपुत्राः । उपलक्षणमेतत् । रुद्राद्याः सर्वे देवाः **येन पथा** वेदोक्तगुरूपसत्त्यादिमार्गेण वाचा वागिन्द्रियेण **प्रपिबन्ते** अधीयन्ते **प्रणयन्ति** शिष्यान् प्रत्युपदिशन्ति[३] तं मार्गम् **आप्रानम्** । 'आप्लृ व्याप्तौ' इत्यस्मात् चानशि व्यत्ययेन श्नाविकरणे व्यापनशीलं भगवन्तं च **इह कः प्रवोचत्** कः प्रब्रूयात् । "बहुलं छन्दसि" **(पा.सू.७-४-७८)**इति व्यत्ययः । दर्शनोत्कण्ठयैवं पृच्छति । अथवा **कः** चतुर्मुखः **प्रवोचत्** उपदिशतु ॥ हिरण्यगर्भोपदेशस्य मोक्षसाधनत्वं 'स एतस्माज्जीवघनात्'**(षट्प्रश्न-५-५)** इत्यादि[४] प्रमाणसिद्धम् ॥ ७ ॥

---

१. 'आद्यो हि शब्दः महीत्यस्य माहात्म्यार्थकत्वे, द्वितीयस्तु मेत्यस्य मर्यादारूपमानार्थत्वे प्रसिद्धिमाह" **भावबोधः** ॥

२. 'पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात् दर्शनेषु च' **इत्यभिधानम्**

३. 'आत्मेति तूपदिशन्ति ग्राहयन्ति च' ४-१-४ **इति सूत्रम्**

४. **ब्र.सू.भा** १-१-५ उदाहृतम् । तस्यार्थस्तु-यः ब्रह्मलोकं प्राप्तः प्रणवोपासको जीवः 'सः' 'जीवघनात्'जीवसारात्तच्छ्रेष्टात् 'एतस्मात्' चतुर्मुखात्तदुपदेशेन 'परात्परम्' उत्तमादुत्तमं 'पुरि शयं' सकलदेहान्तर्गतं 'पुरुषं' पूर्णं वासुदेवं परमात्मानम् 'ईक्षते'जानातीत्यर्थः यद्यपि **षट्प्रश्नटीकायां** "जीवघनाद्विरिञ्चात् तदुपासनयेति

ಪ್ರತಿಪದಾರ್ಥ :-೭. ಚತುರ್ದಶ = ಹದಿನಾಲ್ಕು ಲೋಕಾಭಿಮಾನಿಗಳಾದ ದೇವತೆಗಳು ಹಾಗೂ, ಅನ್ಯೇ = ಬೇರೆ ದೇವತೆಗಳು ಸಹ, ಯಸ್ಯ= ಯಾವ ಭಗವಂತನ, ಮಹಿಮಾನಃ = ಮಹಿಮೆಯಿಂದ ನಿರ್ಮಿತರಾಗಿದ್ದಾರೋ ಅವರು , ಅಸ್ಯ = ಈ ಭಗವಂತನ ಸುತಸ್ಯ= ಮಗನಾದ ವಾಯುದೇವರ ತೀರ್ಥಮ್ = ಶಾಸ್ತ್ರವನ್ನು, ಧೀರಾಃ = ಜ್ಞಾನಿಗಳಾದ ರುದ್ರಾದಿ ಸರ್ವದೇವತೆಗಳೂ, ಹಾಗೂ ಸಪ್ತ = ವಸಿಷ್ಠಾದಿ ಏಳು ಜನ ಬ್ರಹ್ಮಪುತ್ರರೂ ಸಹ ಯೇನ ಪಥಾ = ಯಾವ ವೇದೋಕ್ತವಾದ ಗುರೂಪಸತ್ತಿ ಮುಂತಾದ ಮಾರ್ಗದಿಂದ, ವಾಚಾ = ವಾಗೀಂದ್ರಿಯದ ಮುಖಾಂತರ, ಪ್ರಪಿಬಂತೇ = ಅಧ್ಯಯನ ಮಾಡುತ್ತಾರೋ, ಹಾಗೂ ಪ್ರಣಯಂತಿ = ಶಿಷ್ಯರನ್ನು ಕುರಿತು ಉಪದೇಶಿಸುತ್ತಾರೋ, ತಮ್ = ಅಂತಹ ಮಾರ್ಗವನ್ನು ಹಾಗೂ ಆಪ್ವಾನಮ್ = ವ್ಯಾಪ್ತನಾದ ಭಗವಂತನನ್ನು ಸಹ ಇಹ =ಈ ಪ್ರಪಂಚದಲ್ಲಿ ಕಃ = ಯಾರು ತಾನೇ, ಪ್ರವೋಚತ್ = ಹೇಳುತ್ತಾರೆ ಅಥವಾ ಕಃ = ಚತುರ್ಮುಖ ಬ್ರಹ್ಮದೇವರು, ಪ್ರವೋಚತ್ = ಉಪದೇಶಿಸಲಿ ಎಂದು ಋಷಿಯ ಪ್ರಾರ್ಥನೆ.

7. The presiding deities of all the fourteen worlds, by the kind grace of the Lord, and the seven great Rishi seers, (Vasishta and others, all Brahma's sons) the highly knowledgeable Rudra and all the seers, worship in the prescribed way the Scriptures revealed by Vayu and seek his blessings. are the real heroes. May they preach and spread the message of the Lord and the Vayu in the world. And may they seek the knowledge from Brahma.

---

यावत् । ईक्षते पुनरभिवृद्धज्ञानो भवति ईक्षित्वाच्च तं प्राप्नोति'' इत्युक्ते-रीक्षतेरपरोक्षज्ञानार्थत्वं प्रतीयते । तथापि मूले ज्ञानसामान्यविषयत्वरूपेक्षणीयत्वहेतो-रसिद्धिपरिहारायास्याः श्रुतेरुपन्यस्तत्वात् 'हिरण्यगर्भोपदेशेन'इति टीकोक्तेश्चेह प्रकृतानुगुण्यादीक्षितिः परोक्षार्थो व्याख्येयः ॥--भाष्यदीपिका ॥

**संहिता – सहस्रधा पंञ्चदशान्युक्था[१]**
**यावद् द्यावांपृथिवी तावदित्तत् ।**
**सहस्रधा मंहिमानंः सहस्रं**
**यावद्ब्रह्म विष्ठिंतं तावंती वाक् ॥ ८ ॥[२]**

**पदपाठः – सहस्रधा । पञ्चऽदशानिं । उक्था । यावंत् । द्यावां पृथिवी इति । तावंत् । इत् । तत् । सहस्रधा । महिमानंः । सहस्रंम् । यावंत् । ब्रह्म । विऽस्थिंतम् । तावंती । वाक् ॥ ८ ॥ (सप्तदशपदानि)**

**सायणभाष्यम् -** ८ सहस्रधा सहस्रसङ्ख्याकेषु ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु पञ्चदशानि चक्षुः श्रोत्रं मनो वाक् प्राण इत्येतानि पञ्च । तदाधारत्वेन मात्रापित्रोः सकाशादागतानि पृथिव्यप्तेजो-वाय्वाकाशरूपाणि भूतानि मिलितानि दश । एवं पञ्चदशसङ्ख्याका न्युक्थान्युत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु च तेषु । द्यावापृथिवी । षष्ठीद्विवचनस्य 'सुपां सुलुकि्' इति पूर्वसवर्णदीर्घः ॥ द्यावापृथिव्योर्यावद्यत्परिमाणमस्ति तावदित्तत्परिमाणमेवात्माधिष्ठितं प्राणिदेहजातं भवति ॥ 'यावत्तावच्छब्दयोर्यत्तदेतेभ्यः परिमाणे वतुपि' ( पा.५-२-३९ ) 'आ सर्वनाम्नः'(पा. ६-३-९१) इति दीर्घः ॥ किञ्च सहस्रधा सहस्रसङ्ख्याकेषु सहस्रं महिमानः सहस्रसङ्ख्याका महान्तो व्यवहारविशेषा भवन्ति । प्रति विषयं प्रतिलक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः । सहस्रधेत्यत्र विधार्थे

---

१. ''सहस्रधा पञ्चदशान्युक्थेति पञ्च हि दशतो भवन्ति'' ऐ .आ १-३-८

२. विष्णुतत्वनिर्णये प्रथमपरिच्छेदे -वेदापौरुषेयत्वे श्रुतिप्रमाणोदारण इदमुदाहृतम् । यस्य सहस्रपरिमिताः महिमानः प्रत्येकमपि सहस्रधा अपरिमितविधाः तत् ब्रह्म यावत् ब्रह्म यावद्देशकालव्यापितया विष्ठितं विशेषेण स्थितं वाक् वेदवागपि तावती तावद्देशकालव्यापिनी ।

धाप्रत्ययः । ब्रह्म जगत्कारणं वस्तु यावन्नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठितं विशेषेण स्थितं वाक् तावती तत्परिमाणा भवति । एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात् । अन्यत्रापि श्रूयते । 'सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति । 'सहस्रधा पञ्चदशान्युक्थेति पञ्च हि दशतो भवन्ति' (ऐ. आ. १-३-८ )इत्यादिकमारण्यकमत्रानुसन्धेयम् ॥

**व्याख्या – सहस्रधेति** । यस्य विष्णोः **सहस्रधा** सहस्ररूपाणि **उक्था**[१] शेः "बहुलम् छन्दसि" (पा.सू.७--४-७८) इति शेर्लुक् । उत्थापनादुक्थनामकानि **पञ्चदशानि** पञ्चदशरूपाणि यस्य सहस्रपरिमिताः **महिमानः सहस्रधा** प्रत्येकमप्यपरिमिताः **तत्** ब्रह्म **यावत् द्यावापृथिवी** "सुपां सुलुक्' इत्यादिना पूर्वसवर्णदीर्घः । **तावदित्** व्याप्तमिति यावत् । ब्रह्म **यावत्** यावद्देशकालव्याप्तं तथा **विष्ठितं** विशेषेण स्थितं वेद**वाक्** अपि **तावती** तावद्देशकालव्याप्ता ॥८॥

ಪ್ರತಿಪದಾರ್ಥ. ಸಹಸ್ರಧಾ = ಯಾವ ಭಗವಂತನಿಗೆ ಸಾವಿರ ರೂಪಗಳಿದ್ದಾವೋ, ಉಕ್ಥಾ =ಉಕ್ಥ ಎಂಬ ಹೆಸರಿನಿಂದ ಪ್ರಸಿದ್ಧವಾಗಿರುವ, ಪಂಚದಶಾನಿ = ಹದಿನೈದು ರೂಪಗಳು ಇದ್ದಾವೋ, ಯಾವ ಭಗವಂತನ, ಮಹಿಮಾನಃ = ಮಹಿಮೆಗಳು, ಸಹಸ್ರಧಾ = ಪ್ರತ್ಯೇಕವಾಗಿ ಅಪರಿಮಿತವಾಗಿದ್ದಾವೋ, ತತ್ = ಅಂತಹ ವ್ಯಾಪ್ತನಾದ ಬ್ರಹ್ಮನು, ಯಾವತ್ = ಎಷ್ಟರವರೆಗೆ ದ್ಯಾವಾಪೃಥಿವೀ = ದ್ಯುಲೋಕ, ಪೃಥಿವೀಲೋಕಗಳಿಂದ ಉಪಲಕ್ಷಿತವಾದ ಸಕಲ ಲೋಕಗಳಿವೆಯೋ ತಾವದಿತ್ = ಅಲ್ಲಿಯವರೆಗೆ ವ್ಯಾಪಿಸಿಕೊಂಡಿದ್ದಾನೆ. ಬ್ರಹ್ಮ = ಇಂತಹ ಬ್ರಹ್ಮನು ಯಾವತ್ = ಯಾವ ದೇಶ,ಕಾಲದವರೆಗೆ ವ್ಯಾಪಿಸಿ ವಿಷ್ಟಿತಃ = ವಿಶೇಷವಾಗಿ ಇದ್ದಾನೋ, ವಾಕ್ = ವೇದವಾಕ್ಯವೂ ಸಹ , ತಾವತೀ = ಅಷ್ಟು ದೇಶ ಕಾಲಗಳನ್ನು ವ್ಯಾಪಿಸಿದೆ.

---

१. "महाव्रतनियुक्तं यद् ऋक्सहस्रं हरेः प्रियम् । तदुक्थमिति सम्प्रोक्तं तेनेयो विष्णुरेव हि" ऐ.उ.भा.२-३-२ उदाहृतगारुडवचनम् ।(२) 'उत्थापनादुक्तनामा' १-२-१ ऐ.उ.भा.उ.वचनम्, बृ.उ.भा.७-१५-१ उ.वचनम् ।

8. The Lord who has thousands of forms, is known in the world as Uktha. He who presents Himself in fifteen forms also, and .in any form has countless and infinite auspicious attributes, and that Lord pervades all the worlds and space (Dyu-Pruthvi) and Vedic knowledge also spreads so far, making it clear that the Lord and Vedas are eternally co-existent.

**संहिता – कश्छन्दसां योगमा वेद धीरः**
**को धिष्ण्यां प्रति वाचं पपाद ।[१]**
**कमृत्विजामष्टमं शूरमाहु-**
**र्हरी इन्द्रस्य नि चिकाय कः स्वित् ॥ ९ ॥**

**पदपाठः – कः । छन्दसाम् । योगम् । आ । वेद । धीरः । कः । धिष्ण्याम् । प्रति । वाचम् । पपाद । कम् । ऋत्विजाम् । अष्टमम् । शूरम् । आहुः । हरी इति । इन्द्रस्य । नि । चिकाय । कः । स्वित् ॥ (द्वाविंशतिपदानि)**

**सायणभाष्यम्** - ९ धीरो धीमान् को मानुषच्छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना नियोगमा वेद । आ जानाति । को वा

१. 'छन्दसां वेदानां योगं ब्रह्माख्याभिधेयसम्बन्धं क आ वेद ? धिष्ण्यमाधारः । धिष्ण्यं च अयम् अश्चेति धिष्ण्याः -परमः । अन्यार्थकतया प्रतीयमानमपि वाचं तं धिष्ण्यामुद्दिश्य कः प्रतिपपाद । क इति ब्रह्मा,कर्त्राक्षेपो वा । अत्रापि वेदार्थस्य ज्ञानप्रतिपादनयोरेवोक्तत्वान्न कर्ता अस्तीति पर्यवस्यते ॥'

– तत्वमञ्जरी -वि.त.नि. टीका

तात्पर्यचन्द्रिकायाम् - ज्योतिरधिकरणे 'कश्छन्दसां योगमा वेद धीरः' इति श्रुतौ च वैदिकयौगिकार्थस्य दुर्ज्ञानत्वोक्तेश्च' इति ॥ **प्रकाशिका** - अनुभाष्य-सुधोक्त-तात्पर्यादपि तात्पर्यान्तरमुपेत्याह - कश्छन्दसामिति । को धीरः छन्दसां योगं ब्रह्मणि योगवृत्तिं वेद ? न कोऽपीत्यर्थः ।

धिष्ण्याम् । धिष्ण्यानि होत्रादीनां सप्तस्थनानि । तदर्हां वाचं प्रति पपाद । प्रतिपादयति । करोति । किञ्चर्त्विजां होत्रादीनां स्थानमष्टममष्टसङ्ख्यापूरकं शूरं स्वतन्त्रं कमाहुः । वदन्ति । कः स्वित् कः खल्विन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ । ऋक्सामे वा इन्द्रस्य हरी इत्याम्नायते । तादृशौ हरी नि चिकाय । नितरां पूजयति । जानाति । वेदिता प्रतिपादयिता अष्टसङ्ख्यापूरकस्य देवस्य ज्ञाता वा परमात्मनोऽन्यो नास्तीत्यर्थः ।। ९ ।।

**व्याख्या–** प्राज्ञेन केनचित् पुरुषेण कृतत्वात् कथमेतत् ? इत्यत उक्तम् **कश्छन्दसामिति**[1]। **छन्दसां** वेदानां **योगम्** अर्थैः सह वाच्य-वाचकभावसम्बन्धं **कः धीरः** धीरो धीमान् । धीशब्दोपपदात् रमेर्डप्रत्यये, दं उं गं डं रं ड' इत्यादौ बहुलग्रहणात् प्रत्ययडकारालोपे अपि ''चुटू'' (पा.सू. १-३-७) इत्यनेन डकारलोपे प्रथमैकवचने रूपम् [2] । **आ वेद** सम्यग्वेद । न कोपि । **धिष्ण्यां**[3] बुद्धिपूर्वां **वाचं** वेदवाचं **कः प्रतिपपाद** प्रति-पादितवान् । न कोपि । वेदार्थस्य ज्ञाता, ज्ञात्वा व्याख्यातापि दुर्लभः किमुत वक्तेति । अथवा -

''कश्छन्दसां योगमिति श्रुतेर्योगार्थतत्ववित् ।
[4]ब्रह्मैवेको न चान्योऽस्ति क इत्यस्योभयार्थतः''[5] (अनु-१४-२)

---

१. 'प्राज्ञेन' इत्यारभ्य 'धीमान्' इत्येतत्पर्यन्तानि, 'आवेद'इत्यारभ्य 'तत्कर्ता' इत्यन्तानीमानि वाक्यानि वि.त.नि. टीकास्थन्येव ।

२. 'ऊषसुषिमुष्कमधो रः' इत्यन्यत्राप्यन्येभ्योप्युपसङ्ख्यानादत्रापि धीशब्दान्मत्वर्थीयो रप्रत्ययः' वि.त.नि. व्या.टि ।-प्र.परि।

३. 'धिष्ण्यो धिषण्यो धिषणभावः । धिषणा वाक्,धिषेर्दधात्यर्थे । धी सादिनीति वा । धी सानिनीति वा' निरुक्ते -८-३

४. 'ब्रह्मैको नैव' पाठान्तरं-वि.त.नि.व्या.टि.

५. न्यायसुधा – ''नन्वल्पल्पबुद्धीनामपि प्रतिपदान्वय एव ब्रह्मज्ञानहेतुर्भवतीति किं वाक्यन्वयेनेत्यत आह - क इति । 'कश्छन्दसां योगमावेद धीरः'इति श्रुतेर्वैदिक-

इत्यनुव्याख्यानोक्तेः, कः करधातोः डप्रत्यये रूपम् । चतुर्मुखः वेदेति । **ऋत्विजां कं** सुखकरम् **अष्टमं** ''पृथिव्या आपो रसो,अपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋचः साम रसः साम्न उद्गीथो रसः''**(छां.उ. १-१-२)** इति छन्दसोपनिषत्तद्भाष्योक्तरीत्या पृथिवी-वरुण-सोम-रुद्र-वाङ्नामकसरस्वती-रूपद्वयवाय्वपेक्षया अष्टमस्थानीयं **शूरं** ''शुसिचिमीनां दीर्घश्च'' **(उणादि.२-२५)** इत्यनेन सौत्रसुधातोः ऋन्प्रत्यये धातोः दीर्घे च रूपम् । के **आहुः** । **इन्द्रस्य** परमैश्वर्यादिविशिष्टस्य भगवतः **हरी** अश्वौ कस्वित् **कः** पुरुषः **नि चिकाय** ददर्श । प्लुतवर्चमेतत् पदम् ॥ ९ ॥

ಪ್ರತಿಪದಾರ್ಥ :-೯ ಛಂದಸಾಮ್ = ವೇದಶಬ್ದಗಳಲ್ಲಿರುವ, ಯೋಗಮ್ = ವಾಚ್ಯವಾಚಕಭಾವರೂಪ ಅರ್ಥವನ್ನು, ಕಃ =ಯಾವ ಧೀರಃ = ಬುದ್ಧಿವಂತನು ತಾನೇ, ಆ = ಚೆನ್ನಾಗಿ, ವೇದ = ತಿಳಿದಿದ್ದಾನೆ? ಯಾರೂ ಸಹ ತಿಳಿದಿಲ್ಲ. ಧಿಷ್ಣ್ಯಂ = ಬುದ್ಧಿಪೂರ್ವಕವಾಗಿ, ವಾಚಮ್ = ವೇದವಾಕ್ಯವನ್ನು ಕಃ = ಯಾರು ತಾನೇ ಪ್ರತಿಪಪಾದ= ಪ್ರತಿಪಾದನೆ ಮಾಡುತ್ತಾನೆ. ಯಾರೂ ಸಹ ಮಾಡುವುದಿಲ್ಲ. ವೇದಾರ್ಥದ ಜ್ಞಾನಿಯೇ ದುರ್ಲಭ.ಆದ್ದರಿಂದ ವೇದಾರ್ಥವನ್ನು ಹೇಳುವ ವ್ಯಕ್ತಿ ಇನ್ನೂ ದುರ್ಲಭ ಎಂದು ಭಾವ. **ಋತ್ವಿಜಾಮ್** = ಋತ್ವಿಜರಿಗೆ, **ಕಮ್**= ಸುಖವನ್ನುಂಟು ಮಾಡುವ, **ಅಷ್ಟಮಮ್**= ಪೃಥಿವ್ಯಾದ್ಯಪೇಕ್ಷಯಾ ಎಂಟನೆಯ

---

पदप्रयोगवृत्तेरल्पबुद्धिभिरशक्यज्ञानत्वाद् युक्तं वाक्यन्वयव्युत्पादनमिति शेषः ॥ नन्वेवं तर्हि योगवृत्त्या प्रतिपदसमन्वयव्युत्पादनं न कर्तव्यम् । को धीरः छन्दसां योगं ब्रह्मणि योगवृत्तिम् आ वेद न को अपि इति निरधिकारित्वश्रवणात् । नहि गायमनो बधिरेषु गायतीत्यत आह -योगार्थेति ॥ योगस्यार्थो योगार्थः । तस्य तत्वं याथार्थ्यम् । चशब्दो अर्थद्वयसमुच्चयार्थः । अयमस्याः श्रुतेरर्थः इति शेषः ॥ एतदुपपादयति – क इति ॥ 'प्रजापतिर्वै कः' इति श्रुतेः कशब्दो ब्रह्मार्थः । किंवृत्तस्य चाक्षेपे वृत्तिः सुप्रसिद्धा । तथाच क इत्यस्योभयार्थत्वाद् ब्रह्मार्थत्वे तस्य योगवृत्तिज्ञाने सामर्थ्यकथनान्नानधिकारिकत्वम् । आक्षेपार्थत्वे तदन्येषामनधिकारकथनाद्युक्तो वाक्यन्वयाभ्युपगमः । ननु कथमेतत् । आवृत्तेस्तन्त्रधर्मद्वेत्यदोषः ॥ प्रमाणं चात्रान्यथानुपपत्तिरिति ॥''

ಸ್ಥಾನದಲ್ಲಿರುವ, ಶೂರಮ್ = ಭಗವಂತನನ್ನು, ಕಃ = ಯಾರು ತಾನೇ, ಆಹುಃ = ಹೇಳಲು ಸಾಧ್ಯ ? . ಇಂದ್ರಸ್ಯ = ಪರಮೈಶ್ವರ್ಯಶಾಲಿಯಾದ ಭಗವಂತನ, ಹರೀ = ಮನಸ್ಸು ಮತ್ತು ಬುದ್ಧಿ ಎಂಬ ಎರಡು ಕುದುರೆಗಳನ್ನು, ಕಶ್ಚಿತ್ = ಯಾವ ಪುರುಷನು ತಾನೇ, ದದರ್ಶ= ಕಂಡಿದ್ದಾನೆ.

9. Who is there who has fully and coherently understood the words of the Vedas and their object, the Lord? None!. It is very rare to find the one who can interpret the Vedas clearly and correctly. Similarly, who is there who can explain the Lord in words, in full; The Lord is for above the world though He is in it; beyond the world of lights, though He is in it. Who can dare claim that he has seen the Lord, who has those two horses which are His intellect and mind.

**संहिता – भूम्या अन्तं पर्येके चरन्ति**
**रथस्य धूर्षु युक्तासो अस्थुः ।**
**श्रमस्य दायं वि भंजन्त्येभ्यो**
**यदा यमो भवति हर्म्ये हितः ॥ १० ॥**

**पदपाठः – भूम्याः । अन्तम् । परि । एके । चरन्ति । रथस्य । धूःऽसु । युक्तासः । अस्थुः । श्रमस्य । दायम् । वि । भजन्ति । एभ्यः । यदा । यमः । भवति । हर्म्ये । हितः ॥ १० ॥** **(एकोनविंशतिपदानि)**

**सायणभाष्यम्** - १० एके केचनाश्वा भूम्याः पृथिव्याः । अनेन द्युलोकोऽप्युपलक्ष्यते । द्युलोकस्य चान्तं पर्यन्तं परि चरन्ति । तदानीं सर्वत आगच्छन्ति । तदा च तेऽश्वा रथस्य धूर्षु युगादिभारेषु युक्तासो युक्ताः सन्तोऽस्थुः । तिष्ठन्ति । एभ्योऽश्वेभ्यः श्रमस्य दायम् ॥ 'दो अवखण्डने' घञ् । 'कर्षात्वत' इत्यन्तोदात्तत्वम् ॥

श्रमस्य नाशकं घासादिकं वि भजन्ति । देवाः प्रयच्छन्ति । यदा यस्मिन्काले यमो नियन्ता सूर्यो हर्म्ये हर्म्यस्थानीये रथे हितो निहितो भवति । तदैते भजन्तीत्यर्थः ॥ १० ॥

**व्याख्या – भूम्या इति । भूम्याः** भूदेव्याः **श्रमस्य** भारस्य **अन्तं** नाशं 'उद्दिश्य' 'यमो नियमनाद्धरिः' (ईशावास्यभाष्ये -१८) इत्युक्तेः **यमः** कृष्णः **हर्म्ये** हर्म्यनुकूल्ये रथे पदा **निहितः** भवति बभूव । तदा **एके** पूर्वमन्त्रस्तुता इन्द्रांशार्जुनरथाश्वाः **रथस्य धूर्षु** कृष्णेन **युक्तासः** 'आज्जसेरसुक्' । योजिताः सन्तः **परि चरन्ति** । पर्यचरन् । शत्रुसंहारानन्तरं स्थिताश्च एभ्यः अश्वेभ्यः **दायं वि भजन्ति । अदुः** । छान्दसत्वाल्लटो भूतार्थकता ॥ १० ॥

**घर्मसूक्तव्यकरणधर्मप्रीतो रघूत्तमः ।**
**कर्म पौर्वं पराकृत्य शर्म मौक्तं प्रयच्छतु ॥**

**घर्मेति ।** घर्मसूक्तव्यकरणधर्मप्रीतः घर्मसूक्तव्याख्यानजनितधर्मेण प्रीतः रघूत्तमः रघुकुलेन्द्रः रामः पौर्वं पूर्वजनितं कर्म, पराकृत्य मौक्तं मुक्तिसम्बन्धि सुखं प्रयच्छतु प्रकर्षेण ददातु ॥[१]

**॥ श्रीघर्मसूक्तव्याख्यानं समाप्तम् ॥**

ಪ್ರತಿಪದಾರ್ಥ :-೧೦ ಭೂಮ್ಯಾಃ = ಭೂದೇವಿಯ ಶ್ರಮಸ್ಯ = ಭಾರದ ಅಂತಮ್ = ನಾಶವನ್ನು ಉದ್ದೇಶ ಮಾಡಿಕೊಂಡು ಯಮಃ ನಿಯಾಮಕನಾದ ಶ್ರೀಕೃಷ್ಣನು ಹರ್ಮ್ಯೇ = ಉಪ್ಪರಿಗೆಯಂತೆ ಅನುಕೂಲವಾಗಿರುವ ರಥೇ =ರಥದಲ್ಲಿ (ನಿ)ಹಿತಃ = ಸನ್ನಿಹಿತನಾಗಿ ಕುಳಿತುಕೊಂಡನು. ಆಗ ಏಕೇ = ಹಿಂದಿನಮಂತ್ರದಲ್ಲಿ ಪ್ರಸ್ತುತವಾದ ಇಂದ್ರಾಂಶನಾದ ಅರ್ಜುನನ ರಥದ ಕುದುರೆಗಳು ರಥಸ್ಯ =

---

१. विष्णुस्तुतिटीकागतव्याख्यायां व्याख्यातृभिरेवान्तिममङ्गलाचरणमेवं व्याख्यातम् ।

ಅರ್ಜುನನ ರಥದ ಧೂರ್ಷು = ನೊಗಗಳಲ್ಲಿ ಯುಕ್ತಾಸಃ = ಶ್ರೀಕೃಷ್ಣನಿಂದ ಯೋಜಿತವಾದವುಗಳಾಗಿ ಪರಿಚರಂತಿ= ಸಂಚಾರಮಾಡಿದವು. ಶತ್ರುಸಂಹಾರಾನಂತರದಲ್ಲಿ ಉಳಿದವರು ಏಭ್ಯಃ = ಈ ಕುದುರೆಗಳಿಗೆ ದಾಯಮ್ = ದಾಯವನ್ನು ವಿ ಭಜಂತಿ = ಕೊಟ್ಟರು.

ಇಲ್ಲಿಗೆ ಶ್ರೀಸತ್ಯಸಂಧತೀರ್ಥರ ವ್ಯಾಖ್ಯಾನಾನುಸಾರಿಯಾದ
ಘರ್ಮಸೂಕ್ತದ ಪ್ರತಿಪದಾರ್ಥವು ಸಮಾಪ್ತವಾಯಿತು.

10. Out of consideration for Bhoodevi who could not bear the atrocities of the wicked, Lord Krishna mounted on a magnificent chariot and sat Himself comfortably to put an end to their atrocities, and to establish righteousness. Arjuna is an incarnation of Indra. The yoke of Arjuna's chariot was borne and controlled by the Lord Himself Controlled by the Lord,.the chariot started moving. After the destruction of the enemies, the horses were fed and fondled by all.

With this, we come to the end of the word to word translation of the Sanskrit commentary on Gharma sukta by Sri Satyasandhatirtha.

॥ श्रीकृष्णार्पणमस्तु ॥

# परिशिष्टम्

## अथर्वपाठः

१. यस्ते मन्योऽविधद्वज्रसायक सह ओजः पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा वयं सहस्कृतेन सहसा सहस्वता ।।१।।

२. मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः ।
मन्युर्विश इडते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ।। २ ।।

३. अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ।। ३।।

४. त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहीयानस्मास्वोजः पृतनासु धेहि ।। ४ ।।

५. अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो अक्रतुर्जिहीडाहं स्वातनूर्बलदावा न एहि ।। ५ ।। -

६. अयं ते अस्म्युप न एह्यर्वाङ् प्रतिचीनः सहुरे विश्वदावन् ।
मन्यो वज्रिन्नभि न आववृत्स्व हनाव दस्यूं रुत बोध्यापेः ।। ६ ।।

७. अभि प्रेहि दक्षिणतो भवा नोऽधा वृत्राणि जङ्घनाव भूरि ।
जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव ।। ७ ।।

८. त्वया मन्यो सरथमारुजन्तो हर्षमाणा हृषितासो मरुत्वन् ।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ।।१।।

९. अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून् वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व ।।२।।

१०. सहस्व मन्यो अभिमातिमस्मै रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयासा एकज त्वम् ।।३।।

११. एको बहूनामसि मन्य ईडिता विशंविशं युद्धाय सं शिशाधि ।
अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्मसि ॥ ४॥

१२. विजेषकृदिन्द्र इवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आ बभूथ ॥५ ॥

१३. आभूत्या सहजा वज्रसायक सहो बिभर्षि सहभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येऽधि महाधनस्य पुरुहूत संसृजि ॥ ६॥

१४. संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियो दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ ७ ॥

* * * *

## अथ ऋग्विधानोक्तमन्युसूक्तविनियोगविधिः

''यस्ते मन्यो इति सपत्नघ्ने त्विमे जपेत् ।
घृतेनाभिहुतं चाभ्यां धारयेदायसं मणिम् ॥१ ॥
जुहुयादायसं शङ्कुमाभ्यामेव चतुर्दशीम् ।
खदिरे सुसमिद्धेऽग्नौ सपत्नान् प्रतिबाधते ॥२॥
यथा हि परमं ब्रह्म गुह्यं पावनमद्भुतम् ।
तथा संवननं हृद्यं न ह्यस्माद्विष्यते परम् ॥३॥
उपोष्य द्वादशाहानि जपन्नेतमृषिं सदा
तन्मनाः प्रयतः स स्यात् त्रिरह्नोऽभ्युपयादवः ।
अन्ते तु द्वादशाहस्य शुचौ देशे समाहितः
पुंसः प्रतिकृतिं कुर्याद्भूमौ पांसुमयीं तथा ॥४॥
तस्या हृदयदेशं तु समाक्रम्य जपेदृषिम् ।
अमोघं कर्म जानीयादहोरात्रे गते सति ॥५॥

त्र्यहेण धनिनं वैश्यं चतूरात्रेण क्षत्रियम् ।
राजानं पञ्चरात्रेण षड्रात्रेण द्विजोत्तमम् ॥६॥
तपस्विनं सप्तरात्राज्जपेद्भुञ्जीत चैव तम् ।
अपि वोपोषितः स्नातो जपेदेतत्सदा स्थितः ॥७॥
य इच्छेदात्मनः कर्तुं हीनां तु परिवर्जयेत् ।
सहस्रसम्पातहुतं बिल्वानां चूर्णमावपेत् ॥८॥
उदपाने वशं नेतुं तं जनं क्षिप्रमानयेत् ।
मातर्यात्मनि पुत्रेषु पितृभ्रातृसुहृत्सु च ॥९॥
हृद्यमेतत्प्रयुञ्जीत शिरसा धारयेद्गुडम् ।
सुमित्रं तु परिष्वज्य मूर्धन्याघ्राय चात्मजम् ॥१०॥
हृद्यमेतत्प्रयुञ्जीत शान्त्यर्थाय सुखाय च ।
असंसिद्धे संसवने पांसुप्रतिकृतिं पथि ॥११॥
प्रज्वाल्य जुहुयादग्निं घृतेन ब्राह्मणो यदि ।
क्षत्रियस्य तु तैलेन सार्षपेण विशामपि ॥१२॥
आयसीं वै प्रतिकृतिमग्निमध्ये निधापयेत् ।
तां च प्रज्वलितां मत्वा जुहुयात्तन्मनाः शुचिः ॥१३॥
उग्रेण मनसा हन्यात् क्रुद्धश्च जुहुयाद् घृतम् ।
यथा यथा प्रज्वलिते हूयते जातवेदसि ॥१४॥
दीप्ता प्रतिकृतिर्विप्रस्तथा स्वं वशमेष्यति ।
स्मशानदग्धपांसूनां कुर्याद्वेदिं विलक्षणाम् ॥१५॥
वैभीतकेध्मे ज्वलिते लोहप्रतिकृतिं न्यसेत् ।
अर्धरात्रे स्थिते तैलं सार्षपं लवणान्वितम् ॥१६॥
तत्र शरमयं कुर्यात् प्रस्तरं प्रतिलोमतः ।
त्रिषु शङ्कुषु चासीनो जुहुयादुग्रदर्शनः ॥१७॥

मुक्तकेशो वधं प्रेप्सुरचिरेण प्रसादयेत् ।
अथवाभिचरेदेवं जुहुयादात्मशोणितम् ॥१८ ॥
वशं नयति राजानं क्षिप्रं जनपदं पुरम् ।
पुष्टिकर्माऽपि कर्तव्यं हृद्येनोक्तं यतात्मना ॥१९॥
अनागसि न कुर्वीत ब्राह्मणो वधसंयुतम् ।
सरूपवत्सायाश्च गोः पयसा साधयेच्चरुम् ॥२०॥
सहस्रसम्पातहुतं पाययेद्वस्तमग्रदम् ।
सहस्रानुचरो वत्सः स स्याद्रोगैर्विवर्जितः ॥२१॥
गाश्चैव पाययेत्ताश्च भवन्ति व्याधिवर्जिताः ।
पुत्रांश्च प्राशयेन्नित्यं प्रियानन्यांश्च सज्जनान् ॥२२॥
निरामयाश्च स्निग्धाश्च भवन्ति विगतज्वराः ।
स्त्रियं चेदभिमन्येत तस्याः संवननं महत् ॥२३ ॥
व्रीहीणां मखभिन्नानां तण्डुलान् सूक्ष्मचूर्णितान् ।
सहस्रसम्पातहुतान् स्वेदयेत्कुशलोऽग्निना ॥२४॥
तेन प्रतिकृतिं कुर्यात्तां ध्यात्वा मनसा स्त्रियम् ।
अक्तां प्रथमतश्छिन्द्यात् फडित्यग्नौ निधापयेत् ॥२५॥
अथ जङ्घे जानुनी च ऊरू बाहू ततः शिरः ।
छित्वा हृदयदेशं तु हृदये स्वे निवेशयेत् ॥२६॥
जपन्निममृषिं विप्रः स्त्री वशं साऽधिगच्छति ।
नैतत्परिगृहीतासु हीनवर्णासु यश्चरेत् ॥
पतिमस्या गुणी कुर्यात् पूर्वं पश्चात्तु तां स्त्रियम् ॥ २७॥
भुक्त्वा वा पायसं सद्यश्छर्दयित्वा निधापयेत् ।
तच्चूर्णं कृष्णजायायै देयं संवननं स्मृतम् ॥२८॥

महावृक्षफलान्येवमयुग्मान्यभिमन्त्रयेत् ।
तेषां युग्मानि भुञ्जीत स्वयमर्धानि शेषयेत् ॥२९॥
तानि दद्याद्यमिच्छेत्तु वशीकर्तुं जपन्नृषिम् ।
सुहृद्भूत्वा सुहृद्यस्य देयं संवननं स्मृतम् ॥३०॥
एकैकमभिरूपं तु हृद्यसूक्ताद्यतः पुनः ।
कर्माणि त्वभिरूपाणि कुर्याद्यस्तु यथेच्छति ॥३१॥
पराकदासस्य विधिं हृद्येनोक्तं विदुर्बुधाः ।
स्त्रीणां संवननं चैतत् पुंसामपि विधीयते ॥३२॥
द्वेष्यं तु ज्ञातिनामेव जयश्चैव सदा युधि ।
खादिरं कारयेच्छङ्कुं हृदि तं संनिवेशयेत् ॥३३॥
कृत्वा प्रतिकृतिं पूर्वं पांसुभिर्वाऽथवा तुषैः ।
इषुमप्यनुमन्त्र्यैव सङ्ग्रामं संप्रकल्पयेत् ॥ ३४॥
रिपुघ्नमेतज्जानीयात् प्रयुक्तमपराजितम् ।
पराकदासद्वेष्यार्थं हृद्यं संवननं स्मृतम् ॥३५॥
चिन्तयेन्मनसाप्येते सूक्ते सिद्धिं नियच्छति ॥ ३६॥

( ऋग्विधाने तृतीयाध्याये ७८ -११५ पर्यन्तम् )

- - - - - -

## १. मन्युसूक्तारोहणावरोहणविधिः

'यस्ते मन्यो' इति सप्तर्चं प्रथमं सूक्तम् । तस्य तापसपुत्रो मन्यु ऋषिः । मन्युनामक मुख्यप्राणान्तर्गतश्रीलक्ष्मीनृसिंहो देवता,त्रिष्टुप् छन्दः । 'त्वया मन्यो' इति सप्तर्चं द्वितीयं सूक्तम् । मन्युनामक मुख्यप्राणान्तर्गत-श्रीलक्ष्मीनृसिंहो देवता । अन्त्याश्चतस्रो जगत्यः ॥

**करन्यासः -**

ॐ 'यस्ते मन्यो' अङ्गुष्ठाभ्यां नमः ।

ॐ 'मन्युरिन्द्रो' तर्जनीभ्यां नमः ।

ॐ 'अभीहि मन्यो' मध्यमाभ्यां नमः ।

ॐ 'अयं ते अस्म्युप मे' अनामिकाभ्यां नमः ।

ॐ 'त्वया मन्यो' कनिष्ठिकाभ्यां नमः ।

ॐ 'संसष्टं धनम्' करतलकरपृष्टाभ्यां नमः ॥

भूर्भुवः स्वरोम्' इति दिग्बन्धः ॥

(एवं द्विवारं कार्यम् )

**ऊर्ध्वाभ्यामान्त्रमाले तदनु दरमरिं खड्गखेटं च बाणे-**
**ष्वासं कपालं मुसलमपि गदां पाशमप्यङ्कुशं च ॥**
**ऊर्वोर्विन्यस्तदैत्यं तदुदरकुहरं दारयन्तं च दोर्भ्यां**
**रक्तज्वालाज्वालामयं तं ज्वरसमरभये चिन्तयेदुग्रसिंहम् ॥१॥**

**दंष्ट्राकरालवदनं ज्वालामालाशिरोरुहम् ।**
**कपालकृत्तिकाहस्तं रुद्रं मृत्युं नमाम्यहम् ॥ २ ॥**

ततः पुनश्चरणं कुर्यात् ।

* * *

## २. मन्युसूक्तपुनश्चरणप्रकारः

(शाम्याप्रासग्रन्थालयस्थ मातृका)

एवं 'गुणविशेषणविशिष्टायां शुभतिथौ श्रीलक्ष्मीनृसिंहप्रेरणया श्रीलक्ष्मीनृसिंहप्रीत्यर्थं मम सर्वाभीष्टसिद्ध्यर्थं शत्रूच्चाटनार्थं च मन्युसूक्तपुनश्चरणमहं करिष्ये ॥

## अथाङ्गन्यासः

**अथ गुरुनमस्कारः –**

अथ तत्त्वन्यासपुरस्सरमष्टाक्षरमन्त्रनृसिंहमन्त्रादीन् जपित्वा –

'यस्ते मन्यो ..' इति **शिरसि** ।'मन्युः'इति **ललाटे** ।
'अभीहि मन्यो'इति **नेत्रयोः** । 'त्वं हि मन्यो'इति **नासिकयोः** ।
'अभागः सन्' इति **कर्णयोः** । 'अयं ते अस्म्युप' इति **मुखे** ।
'अभिप्रेहि' इति **हृदये** । 'त्वया मन्यो' इति **बाह्वोः** ।
'अग्निरिव' इति **नाभौ** । 'सहस्व मन्यो' इति **गुह्ये** ।
'एको बहूनाम्' इति **ऊर्वोः** । 'विजेषकृत्' इति **जान्वोः** ।
'आभूत्या सहजा' इति **जङ्घयोः** । 'संसृष्टं धनम्' इति **पादयोः** ॥

**करन्यासः** - ॐ 'संसृष्टं धनम्' अङ्गुष्ठाभ्यां नमः ।
ॐ 'उभयं समाकृतम्' तर्जनीभ्यां नमः ।
ॐ अस्मभ्यं दत्ताम्' मध्यमाभ्यां नमः ।
ॐ 'वरुणश्च मन्युः' अनामिकाभ्यां नमः ।
ॐ 'भियं दधाना हृदयेषु शत्रवः' कनिष्ठिकाभ्यां नमः
ॐ 'पराजितासो अपनिलयन्ताम्' अस्त्राय फट् ।
ॐ 'भूर्भुवःस्वरोम्' इति दिग्बन्धः॥

अस्य श्रीमन्युसूक्तपुरश्चरणमहामन्त्रस्य तापसो मन्युऋषिः । मन्युनामक-रुद्रान्तर्गतउग्रनरसिंहप्रेरणया ...प्रीत्यर्थे मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥

**अथ ध्यानम् -**

**ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं**
**जानुप्सक्तकरयुग्ममथापराभ्याम् ।**

**चक्रं दरं चदधतं प्रियया समेतं**
**तिग्मांशुकोट्यधिकतेजसमस्त(मत्र्य)शक्तिम् ॥**

**ऊर्ध्वाभ्यामान्त्र..... चिन्तयेदुग्रसिंहम् ॥१॥**

**दंष्ट्राकरालवदनं ज्वालामालाशिरोरुहम् ।**
**कपालमौक्तिकधरं तापं मन्युं नमाम्यहम् ॥** इति ध्यानम्

'यस्ते मन्यो' इत्यारभ्य 'पराजितासो अपनिलयन्ताम्' इत्यन्तं पठित्वा,अनन्तरं जपक्रमेण पठित्वा पुनः दण्डायमानेन पठितं चेदेको जपः । एकवारं त्रिवारं सप्तवारम् । एवं क्रमेण सप्तकं कुर्यात् ॥

- - -

## ३. प्रयोगार्णवे

मन्युकल्पमहामन्त्रस्य मन्युमूलमन्त्रोक्तानि षडङ्गानि । मन्युरेवास्य बीजम् । 'अभीहि मन्यो' इति शक्तिः । 'संसृष्टं धनम्'इति कीलकम् । मम शत्रुभयपरिहारार्थे जपे विनियोगः ॥

**अथ न्यासः** -

'यस्ते मन्यो' इति **शिरसि** ।'मन्युः' इति **ललाटे** ।
'अभीहि मन्यो'इति **नेत्रयोः** 'त्वं हि मन्यो'इति **कर्णयोः** ।
'अभागः सन्' इति **नासिकयोः** । 'अयं ते अस्म्युप' इति **मुखे** ।
'अभिप्रेहि' इति **हृदये** । 'त्वया मन्यो' इति **बाह्वोः** । '
'अग्निरिव' इति **नाभौ** । 'सहस्व मन्यो' इति **गुह्ये** ।
'एको बहूनाम्' इति **जान्वोः** । 'विजेषकृत्' इति **जङ्घयोः** ।
'आभूत्या सहजा' इति **पादयोः** । 'संसृष्टं धनम्' इति **सर्वाङ्गेषु** ॥

इति **अङ्गन्यासः** ॥

**करन्यासः** - ॐ 'संसृष्टं धनमुभयं समाकृतम्' ह्रां अङ्गुष्ठाभ्यां नमः ।
ॐ 'अस्मभ्यं दत्तम्' ह्रीं तर्जनीभ्यां नमः ।
ॐ 'वरुणश्च मन्युः' ह्रूं मध्यमाभ्यां नमः ।
ॐ 'भियं दधाना हृदयेषु' ह्रैं अनामिकाभ्यां नमः ।
ॐ 'शत्रवः पराजितासः' ह्रौं कनिष्ठिकाभ्यां नमः ।
ॐ 'अपनिलयन्ताम्' ह्रः करतलकरपृष्ठाभ्यां नमः ॥

## अथ ध्यानम् -

**ज्वलनार्कप्रतीकाशं जटामुकुट (मण्डल) मण्डितम् ।**
**ब्रह्मश्रिया विराजन्तं दीप्यमानमुखाम्बुजम् ॥१॥**

**पद्मासने समासीनं ध्यायन्तं धेनुमुद्रया ।**
**ध्यायेत्तं तापसं मन्युं ममाभीष्टकरं परम् ॥२॥**

...... पीठं निर्माय, आदौ षट्कोणम् । तदुपरि दशादलम् । तदुपरि द्वादशदलम् । तदुपरि षोडशदलम् । तदुपरि अष्टदलं यन्त्रं निर्माय पूजयेत् ॥

## पूजाक्रमः -

मध्ये तपो मूर्तये **मन्यवे परदेवतायै** नमः । षट्कोणे -**वह्निमूर्तये** ...नमः हृदयं पूजयामि । **सूर्यमूर्तये...नमः** शिरः पूजयामि । **सोममूर्तये ...नमः** शिखां पूजयामि । **वायुमूर्तये ...नमः** कवचं पूजयामि । **संवर्तकमूर्तये ....नमः** नेत्रे पूजयामि । **विद्युन्मूर्तये ...नमः** अस्त्रं पूजयामि ॥ **(इति प्रथमावरणम्)**

दशादले - **धूम्रायै नमः । अर्चिषायै । ऊष्मायै । ज्वालिन्यै । विष्फुलिङ्गायै । सन्त्रियायै । सुरूपायै । कपिलायै । हव्य-वाहनायै । कव्यवाहनायै ॥** **(इति द्वितीयावरणम्)**

द्वादशादले -**तापिन्यै । धूम्रायै । मरीच्यै । ज्वालिन्यै । रुच्यै । सुषुम्नायै । भौगदायै । विश्वायै । बोधिन्यै । धारिण्यै । क्षेमायै ॥**
**(इति तृतीयावरणम्)**

षोडशादले - **अमृतायै । मानदायै । पुष्टिन्यै । पूषायै । तुष्ट्यै । रत्यै । धृत्यै । शशिन्यै । चन्द्रिकायै । कान्त्यै । ज्योत्स्नायै । श्रियै । प्रीत्यै । अङ्गदायै । पूर्णायै । पूर्णामृतायै । प्राप्त्यै । ईशित्वायै । विशितायै ॥** **(इति चतुर्थावरणम्)**

तद्बहिः अष्टदले -**अणिमायै । गरिमायै । लघिमायै । महिमायै ॥**
**(इति पञ्चमावरणम्)**

**अथ दिग्देवता -**

१. भृगवे नमः । कश्यपाय । इन्द्राय । वज्राय -इति पूर्वे ॥
२.आत्रेयाय । अग्नये । शक्तये -इति आग्नेय्याम् ॥
३.भरद्वाजाय । यमाय । दण्डाय - इति दक्षिणे ॥
४. विश्वामित्राय । निर्ऋतये । खड्गाय - इति निर्ऋत्याम् ॥
५.गौतमाय । वरुणाय । पाशाय -इति पश्चिमे ॥
६. जमदग्नये । वायवे । अङ्कुशाय -इति वायव्याम् ॥
७. वसिष्ठाय । कुबेराय । गदायै -इति उत्तरे ॥
८. अगस्त्याय । ईशानाय । त्रिशूलाय -इति ईशान्याम् ॥

**॥ इति प्रयोगार्णवे प्रयोगपटले मन्युसूक्तविधिः ॥**

## ४. विनियोगदीपिकायां मन्युसूक्तविधिः

अस्य श्री 'यस्ते मन्यो' इति मन्त्रस्य तापस इन्द्रो देवता । आद्या जगती । 'त्वया मन्यो' इति चतुः जगत्यन्ताः । शेषास्त्रिष्टुभः ॥... महाशत्रु-परिभवार्थं द्वादशलक्षपुनश्चरणम् ॥ मध्यमशत्रुपरिभवार्थं द्वादशसहस्रम् । सामान्यशत्रुपरिभवार्थं द्वादशशतम् ॥ ब्राह्मणे नतु प्रयोक्तव्यम् । स्त्रीणां न तु प्रयोक्तव्यम् । सर्वेषामुपकारार्थं बहुजनप्रार्थनया प्रयोक्तव्यम् ॥ बिभीतकस्य,खादिरस्य समिधं कुर्वन् अन्त्यर्चं जुहुयात् ॥ इध्मश्च वृक्षविशेषेण फलदः ॥

१. राजवश्यार्थं ग्राममध्ये जपेत् । लोकवश्यार्थं तथा ॥

२. दुष्टशत्रुप्रत्युक्तकृत्यपरिहारार्थं स्वगृहमध्ये । औदुम्बर इध्मः । पञ्चखाद्यैर्होमः । दुग्धैर्होमः ॥ ३.रोगनाशार्थं देवतास्थले जपेत् । प्रत्यृचं त्रिमधुराप्लुतैः, आमपत्रैर्वा होमः । रोगोक्तोषधैर्वा होमः ॥ मन्युसूक्तं प्रत्यृचं च होमसङ्ख्यया दुग्धेन तर्पयेत् । होमदशांशेन मार्जनम् ॥ एवं कृते महारोगान्मुक्तो भवति ॥

४. ग्रहपीडानिवृत्त्यर्थं सहस्रं जपेत् । आदित्यादि(ग्रह)समिद्द्रव्यविशेषेण होमः ॥ दुष्टग्रहपीडा निवर्तते ॥

५. अपमृत्युपीडापरिहारार्थममृतमयं चन्द्रमण्डलं स्रवदमृतधारया ध्यात्वा त्रिसहस्रं जपेत् ॥ कपिलाज्यदुग्धेन दधिमिश्रितचरुहोमः । मार्जनं च पूर्ववत् ॥

६. दुःस्वप्नदर्शने त्रिशतं जपेत् । तिलैः होमः । सूक्तेनाभिषेकः ॥ उत्पातारिष्ट,कपोत,उल्कापातादिसर्वारिष्टेष्वेवम् ॥

७.परस्परद्वेषपरिहारेण मित्रतासिद्ध्यर्थं नदीद्वयसङ्गमे पञ्चसहस्रं जपेत् । त्रिमधुरापलुतैः हरिद्राखण्डैः, गुग्गुलेन, इक्षुदण्डैर्वा होमः ॥ मित्रतासिद्धिः ॥

८. राजद्वेषपरिहारार्थं बहुवृक्षसमिद्भिः सहस्रत्रिमधुराप्लुतैर्जुहुयात् । मन्त्रजपान्ते साध्यं नामगृहीत्वा ‘तं प्रसादयामि’ इति अष्टाविंशत्यञ्जलिं दद्यात् । अनेन राजा प्रसीदति ॥

९. लक्ष्मीप्राप्त्यर्थम् अष्टौ घृतदीपान् देवालयान्ते प्रज्वालयेत् । अष्टसहस्रं जपेत् । बिल्वपत्रैः त्रिमधुराप्लुतैर्होमः । दुग्धेन दशांशेन तर्पणम् । पञ्चखाद्यैर्वा होमः ॥ जपसमये मन्त्रन्यासे लक्ष्मीबीजप्रयोगेण, न्यासध्याने अपि सुवर्णराशिमध्यस्थपीतवर्णऋषिं ध्यायेत् । वरदाभयहस्तं प्रार्थयेत् । लक्ष्मीप्राप्तिर्भवति ॥

१०. वन्ध्यापुत्रप्रसवार्थं लक्षपुनश्चरणं कार्यम् । पुत्रजी फलैर्होमः । ? प्रतिदिनं सूक्तमन्त्रैः स्नापयेत् ।.अश्वत्थमूले जपहोमं कार्यम् । ऋतुदिने नागकेलरमभिमन्त्र्य गोदुग्धं पाययेत् । पुत्रप्राप्तिः ॥

११. नष्टपुत्रप्राप्त्यर्थं दशसहस्रं जपेत् । कमलैः शतपत्रैर्होमः । मनसीष्ट-प्राप्तिः ॥

**॥ इति विनियोगदीपिकायां मन्युसूक्तविधिः ॥**

* * * * *

## ५. मन्युकल्पोक्त मन्युसूक्तविधिः

अस्ति गुह्यतमं राजन् सर्वशत्रुनिबर्हणम् ।
राज्यदं सर्वकामानामधनानां धनप्रदम् ॥१॥
यं यं कामयते राजन् त तदाप्नोत्यसंशयम् ।
पश्चादहं प्रवक्ष्यामि श्रुणु पार्थिव सत्तम ॥२॥
पुरा तु नैमिषारण्ये मुनयः संशितप्रताः ।
नारदं परिपप्रच्छुः दस्युबाधविनाशनम् ॥३॥

नारदः- श्रुणुध्वमृषयः सर्वो मन्युकल्पं मयेरितम् ।
व्यासेनेक्तं पुरा विप्राः धर्मराजस्य विस्तरात् ॥
यदुक्तं तव देवर्षे तन्नो ब्रूहि महाव्रत ॥ ४॥

नारदः- श्रुणुध्वमृषयः सर्वे पुरा त्रेतायुगे तदा ।
देवरात इति ख्यातः सूर्यवंशसमुद्भवः ॥ ५॥

स जितः शत्रुभिर्दुःखी नैमिषारण्यमाययौ ।
व्यासोक्तं नारदः प्राह मन्युकल्पं यथाविधि ॥६॥

कथं कार्यमिति प्रोक्तं ......स प्राह नारदः ॥ ७॥

सुवर्णे रजते वापि ताम्रे वा तण्डुलेऽपि वा ।
वृत्तं त्रिकोणं षट्कोणं वृत्तद्वयसमन्वितम् ॥ ८ ॥

बहिः षोडशभिर्युक्तं दलैस्तेषु लिखेत्ततः ।
वृत्तमध्ये साध्यनाम रिपुनाम विलेखयेत् ॥ ९॥

आग्नेय्यां विलिखेन्मन्त्रं षड्भागं कोणषट्कके ।
दलेषु मन्त्रराजं च प्रणवं चाष्टदिक्षु च ॥ १० ॥

इन्द्रादींश्च ततः पृष्टे भैरवादींश्च समुल्लिखेत् ।
एवं विलिख्य मन्योश्च मन्त्रराजमतन्द्रितः ॥११ ॥

प्राणानायम्य सङ्कल्प्य कृत्वा तक्रस्य पूजनम् ।
प्राणप्रतिष्ठां कृत्वाथ षोडशैरुपचारकैः ॥१२ ॥

सम्पूज्य गन्धपुष्पादि धूपदीपादिभिः सदा ।
चक्रराज नमस्तुभ्यं पुरश्चरणमरभेत् ॥१३ ॥

अस्यश्रीमन्युकल्पमहामन्त्रस्य ॐ बीजं ह्रीं शक्तिः क्लीं कीलकम् मम मन्युप्रसादसिद्धिद्वारा ईप्सितार्थसिद्ध्यर्थे जपे विनियोगः

| अथ पादादिन्यासः - **मन्त्रम्** | **स्थानम्** |
| --- | --- |
| १. यस्ते मन्यो विधद्वज्रसायक - | पादाभ्याम् |
| २. सह ओजः पुष्यति विश्वं मा नुषक् - | गुल्फाभ्याम् |
| ३. साह्याम दासमार्यं त्वया युजा - | जङ्घाभ्याम् |
| ४. सहस्कृतेन सहसा सहस्वता - | जानुभ्याम् |
| ५. मन्युरिन्द्रो मन्युरेवास देवः - | ऊरुभ्याम् |
| ६. मन्युर्होता वरुणो जातवेदाः - | कट्याम् |
| ७. मन्युं विश ईळते मानुषीर्याः - | नाभौ |
| ८. पाहि नो मन्यो तपसा सजोषाः - | जठरे |
| ९. अभीहि मन्यो तवसस्तवीयान् - | हृदये |
| १०. तपसा युजा विजहि शत्रून् - | बाहुभ्याम् |
| ११. अमित्रहा वृत्रहा दस्युहा च - | कण्ठे |
| १२. विश्वा वसून्या भरा त्वं नः - | कपोलाय |
| १३. त्वं हि मन्यो अभिभूत्योजाः - | दक्षिणचक्षुषि |
| १४. स्वयंभूर्भामो अभिमाति षाहः - | वामनेत्रे |
| १५. विश्वचर्षणिः सहुरिः सहावान् - | ललाटे |
| १६. अस्मास्वोजः पृतनासु धेहि - | मूर्ध्नि |
| १७. अभागः सन्नप परेतो अस्मि - | आस्ये (शिरसि ) |
| १८. तव क्रत्वा तविषस्य प्रचेतः - | शिखायै |
| १९. तं त्वा मन्यो अक्रतुर्जिहीळाहं - | पृष्ठाय |
| २०. स्वातनूर्बल देयाय मेहि - | पार्श्वाभ्याम् |
| २१. अयं ते अस्म्युप मे ह्यर्वाङ् - | दक्षिणपादाङ्गुष्ठाय |

| | |
|---|---|
| २२. प्रतिचीनः संहुरे विश्वधा यः - | दक्षिणतर्जन्ये |
| २३. मन्यो वज्रिन्नभि मा मा ववृत्स्व - | दक्षिणपादमध्यमाय |
| २४. हनाव दस्यूँरुत बोध्यापेः - | दक्षिणपादानामिकाय |
| २५. अभिप्रेहि दक्षिणतो भवा मे - | दक्षिणपादकनिष्ठिकाय |
| २६. अधा वृत्राणि जङ्घनाव भूरि - | वामपादाङ्गुष्टाय |
| २७. जुहोमि ते धरुणं मध्वो अग्रम् - | वामपादतर्जन्ये |
| २८. उभा उपांशु प्रथमा पिबाव - | वामपादमध्यमाय |
| २९. त्वया मन्यो सरथमारुजन्तः - | वामपादानामिकाय |
| ३०. हर्षमाणासो धृषिता मरुत्वः - | वामपादकनिष्ठिकाय |
| ३१. तिग्मेषव आयुधा संशिशानाः - | उरसि |
| ३२. अभि प्रयन्तु नरो अग्निरूपाः - | शिरसि |
| ३३. अग्निरिव मन्यो त्विषितः सहस्व - | दृष्टिभ्याम् |
| ३४. सेनानीर्नः सहुरे हूत एधि - | मनसि |
| ३५. हत्वाय शत्रून् विभजस्व वेदः - | श्रद्धायै |
| ३६. ओजो मिमानो विमृधो नुदस्व - | पद्भ्याम् |
| ३७. सहस्व मन्यो अभिमातिमस्मे - | हस्ताभ्याम् |
| ३८. रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् - | कर्णाभ्याम् |
| ३९. उग्रं ते पाजो नन्वा रुरुध्रे - | इन्द्राय |
| ४०. वशी वशं नयस एकज त्वम् - | अग्नये |
| ४१. एको बहूनामसि मन्यवीळितः - | यमाय |
| ४२. विशं विशं युधये सं शिशाधि - | निर्ऋतये |
| ४३. अकृत्तरुक् त्वया युजा वयं - | वरुणाय |

| | |
|---|---|
| ४४. द्युमन्तं घोषं विजयाय कृण्महे - | वायवे |
| ४५. विजेषकृदिन्द्रं इवानवब्रवः - | कुबेराय |
| ४६. अस्माकं मन्यो अधिपा भवेह - | ईशानाय |
| ४७. प्रियं ते नाम सहुरे गृणीमसि - | ऊर्ध्वाय |
| ४८. विद्मा तमुत्सं यत आ बभूथं | अधराय |
| ४९. आभूत्या सहजा वज्रसायक - | असिताङ्ग-भैरवाय |
| ५०. सहो बिभर्ष्यभिभूत उत्तरम् - | रुरु-भैरवाय |
| ५१. क्रत्वा नो मन्यो सह मेद्येधि - | चण्ड - भैरवाय |
| ५२. महाधनस्य पुरुहूत संसृजि - | प्रचण्ड- भैरवाय |
| ५३. संसृष्टं धनमुभयं समाकृतं - | मार्ताण्ड- भैरवाय |
| ५४. अस्मभ्यं दत्तां वरुणश्च मन्युः - | ऊहिताङ्ग- भैरवाय |
| ५५. भियं दधाना हृदयेषु शत्रवः - | काल-भैरवाय |
| ५६. पराजितासो अप नि लयन्ताम् - | महा भैरवाय नमः |

इति पादपर्यन्ताङ्गेषु विन्यस्य देहाङ्गन्यासं कुर्यात् ॥

**ध्यानं - वज्रदंष्ट्रं .....॥ १ ॥**

**दंष्ट्राकरालवदनं ज्वालामालाशिरोरुहम् ।**

**कपालमौक्तिकधरं तापं मन्युं नमाम्यहम् ॥ २ ॥**

इति ध्यात्वा ... मन्युसूक्तपुनश्चरणं कुर्यात् ॥

* * *

## अथ पादशः पुनश्चरणम्

यस्ते मन्यो विधद्वज्रसायक
शत्रवः पराजितासो अप नि लयन्ताम् ॥१॥

सह ओजः पुष्यति विश्वमा नुषक्
शत्रवः पराजितासो अप नि लयन्ताम् ॥२॥

साह्याम दासमार्यं त्वया युजा
शत्रवः पराजितासो अप नि लयन्ताम् ॥३ ॥

सहस्कृतेन सहसा सहस्वता
शत्रवः पराजितासो अप नि लयन्ताम् ॥४॥

मन्युरिन्द्रो मन्युरेवास देवः
शत्रवः पराजितासो अप नि लयन्ताम् ॥५॥

मन्युर्होता वरुणो जातवेदाः
शत्रवः पराजितासो अप नि लयन्ताम् ॥६॥

मन्युं विश ईळते मानुषीर्याः
शत्रवः पराजितासो अप नि लयन्ताम् ॥७॥

पाहि नो मन्यो तपसा सजोषाः
शत्रवः पराजितासो अप नि लयन्ताम् ॥८॥

अभीहि मन्यो तवसस्तवीयान्
शत्रवः पराजितासो अप नि लयन्ताम् ॥९॥

तपसा युजा विजहि शत्रून्
शत्रवः पराजितासो अप नि लयन्ताम् ॥१०॥

अमित्रहा वृत्रहा दस्युहा च
शत्रवः पराजितासो अप नि लयन्ताम् ॥११॥

विश्वा वसून्या भरा त्वं नः
शत्रवः पराजितासो अप नि लयन्ताम् ॥१२॥

त्वं हि मन्यो अभिभूत्योजाः
शत्रवः पराजितासो अप नि लयन्ताम् ॥१३॥

स्वयंभूर्भामो अभिमाति षाहः
शत्रवः पराजितासो अप नि लयन्ताम् ॥१४॥

विश्वचर्षणिः सहुरिः सहावान्
शत्रवः पराजितासो अप नि लयन्ताम् ॥१५॥

अस्मास्वोजः पृतनासु धेहि
शत्रवः पराजितासो अप नि लयन्ताम् ॥१६॥

अभागः सन्नप परेतो अस्मि
शत्रवः पराजितासो अप नि लयन्ताम् ॥१७॥

तव क्रत्वा तविषस्य प्रचेतः
शत्रवः पराजितासो अप नि लयन्ताम् ॥१८॥

तं त्वा मन्यो अक्रतुर्जिहीळाहं
शत्रवः पराजितासो अप नि लयन्ताम् ॥१९॥

स्वातनूर्बल देयाय मेहि
शत्रवः पराजितासो अप नि लयन्ताम् ॥२०॥

अयं ते अस्म्युप मे ह्यर्वाङ्
शत्रवः पराजितासो अप नि लयन्ताम् ॥२१॥

प्रतिचीनः सहुरे विश्वधा यः
शत्रवः पराजितासो अप नि लयन्ताम् ॥२२॥

मन्यो वज्रिन्नभि मा मा ववृत्स्व
शत्रवः पराजितासो अप नि लयन्ताम् ॥२३॥

हनाव दस्यूं ऽऋुत बोध्यापेः
शत्रवः पराजितासो अप नि लयन्ताम् ॥२४॥

अभिप्रेहि दक्षिणतो भवा मे
शत्रवः पराजितासो अप नि लयन्ताम् ॥२५॥

अधा वृत्राणि जङ्घनाव भूरि
शत्रवः पराजितासो अप नि लयन्ताम् ॥२६॥

जुहोमि ते धरुणं मध्वो अग्रं
शत्रवः पराजितासो अप नि लयन्ताम् ॥२७॥

उभा उपांशु प्रथमा पिबाव
शत्रवः पराजितासो अप नि लयन्ताम् ॥२८॥

त्वया मन्यो सरथमारुजन्तः
शत्रवः पराजितासो अप नि लयन्ताम् ॥२९॥

हर्षमाणासो धृषिता मरुत्वः
शत्रवः पराजितासो अप नि लयन्ताम् ॥३०॥

तिग्मेषव आयुधा संशिशाना
शत्रवः पराजितासो अप नि लयन्ताम् ॥३१॥

अभि प्रयन्तु नरो अग्निरूपाः
शत्रवः पराजितासो अप नि लयन्ताम् ॥३२॥

अग्निरिव मन्यो त्विषितः सहस्व
शत्रवः पराजितासो अप नि लयन्ताम् ॥३३॥

सेनानीर्नः सहुरे हूत एधि
शत्रवः पराजितासो अप नि लयन्ताम् ॥३४॥

हत्वाय शत्रून् विभजस्व वेदः
शत्रवः पराजितासो अप नि लयन्ताम् ॥३५॥

ओजो मिमानो विमृधो नुदस्व
शत्रवः पराजितासो अप नि लयन्ताम् ॥३६॥

सहस्व मन्यो अभिमातिमस्मे शत्रवः
पराजितासो अप नि लयन्ताम् ॥३७॥

रुजन् मृणन् प्रमृणन् प्रेहि शत्रून्
शत्रवः पराजितासो अप नि लयन्ताम् ॥३८॥

उग्रं ते पाजो नन्वा रुरुध्रे
शत्रवः पराजितासो अप नि लयन्ताम् ॥३९॥

वशी वशं नयस एकज त्वं
शत्रवः पराजितासो अप नि लयन्ताम् ॥४०॥

एको बहूनामसि मन्यवीळितः
शत्रवः पराजितासो अप नि लयन्ताम् ॥४१॥

विशं विशं युधये सं शिशाधि
शत्रवः पराजितासो अप नि लयन्ताम् ॥४२॥

अकृत्तरुक् त्वया युजा वयं
शत्रवः पराजितासो अप नि लयन्ताम् ॥४३॥

द्युमन्तं घोषं विजयाय कृण्महे शत्रवः
पराजितासो अप नि लयन्ताम् ॥४४॥

विजेषकृदिन्द्र इवानवब्रवः
शत्रवः पराजितासो अप नि लयन्ताम् ॥४५॥

अस्माकं मन्यो अधिपा भवेह
शत्रवः पराजितासो अप नि लयन्ताम् ॥४६॥

प्रियं ते नाम सहुरे गृणीमसि
शत्रवः पराजितासो अप नि लयन्ताम् ॥४७॥

विद्मा तमुत्सं यत आ बभूथ
शत्रवः पराजितासो अप नि लयन्ताम् ॥४८॥

आभूत्या सहजा वज्रसायक
शत्रवः पराजितासो अप नि लयन्ताम् ॥४९॥

सहो बिभर्ष्यभिभूत उत्तरं
शत्रवः पराजितासो अप नि लयन्ताम् ॥५०॥

क्रत्वा नो मन्यो सह मेद्येधि
शत्रवः पराजितासो अप नि लयन्ताम् ॥५१॥

महाधनस्य पुरुहूत संसृजि
शत्रवः पराजितासो अप नि लयन्ताम् ॥५२॥

संसृष्टं धनमुभयं समाकृतं
शत्रवः पराजितासो अप नि लयन्ताम् ॥५३॥

अस्मभ्यं दत्तां वरुणश्च मन्युः
शत्रवः पराजितासो अप नि लयन्ताम् ॥५४॥

भियं दधाना हृदयेषु शत्रवः
शत्रवः पराजितासो अप नि लयन्ताम् ॥५५॥

शत्रवः पराजितासोअप नि लयन्तां
शत्रवः पराजितासो अप नि लयन्ताम् ॥५६॥

## अथ अर्धशः पुनश्चरणम्

यस्ते मन्यो विधद्वज्रसायक सह ओजः पुष्यति विश्वं मा नुषक् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१॥

साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२॥

मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥३॥

मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥४॥

अभीहि मन्यो तवसस्तवीयान् तपसा युजा विजहि शत्रून् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥५॥

अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥६॥

त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमाति षाहः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥७॥

विश्वचर्षणिः सहुरिः सहावान् अस्मास्वोजः पृतनासु धेहि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥८॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥९॥

तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वातनूर्बल देयाय मेहि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१०॥

अयं ते अस्म्युप मे ह्यर्वाङ् प्रतिचीनः संहुरे विश्वधा यः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥११॥

मन्यो वज्रिन्नभि मा मा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१२॥

अभिप्रेहि दक्षिणतो भवा मे अधा वृत्राणि जङ्घनाव भूरि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१३॥

जुहोमि ते धरुणं मध्वो अग्रम् उभा उपांशु प्रथमा पिबाव ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१४॥

त्वया मन्यो सरथमारुजन्तः हर्षमाणासो धृषिता मरुत्वः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१५॥

तिग्मेषव आयुधा संशिशाना अभि प्रयन्तु नरो अग्निरूपाः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१६॥

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१७॥

हत्वाय शत्रून् विभजस्व वेदः ओजो मिमानो विमृधो नुदस्व ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१८॥

सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१९॥

उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२०॥

एको बहूनामसि मन्यवीळितो विशं विशं युधये सं शिशाधि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२१॥

अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयार्य कृण्महे ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२२॥

विजेषकृदिन्द्र इवानवब्रवः अस्माकं मन्यो अधिपा भवेह ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२३॥

प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आ बभूथ ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२४॥

आभूत्या सहजा वज्रसायक सहो बिभर्ष्यभिभूत उत्तरम् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२५॥

क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२६॥

संसृष्टं धनमुभयं समाकृतं अस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२७॥

भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२८॥

### अथ ऋक्शः पुनश्चरणम्

यस्ते मन्यो ... सहसा सहस्वता ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥१॥

मन्युरिन्द्रो ... तपसा सजोषाः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥२॥

अभीहि मन्यो ... भरा त्वं नः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥३॥

त्वं हि मन्यो ... पृतनासु धेहि ॥
संसृष्टं धनमुभयं .. अप नि लयन्ताम् ॥४॥

अभागः सन्नप ... देयाय मेहि ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥५॥

अयं ते अस्म्युप ... बोध्यापेः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥६॥

अभिप्रेहि ... प्रथमा पिबाव ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥७॥

त्वया मन्यो.. . नरो अग्निरूपाः॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥८॥

अग्निरिव मन्यो ...विमृधो नुदस्व॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥९॥

सहस्व मन्यो ... एकज त्वम् ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥१०॥

एको बहूना ... विजयाय कृण्महे ॥
संसृष्टं धनमुभयं...अप नि लयन्ताम् ॥११॥

विजेषकृदिन्द्र ... आ बभूथ ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥१२॥

आभूत्या सहजा...पुरुहूत संसृजि ॥
संसृष्टं धनमुभयं...अप नि लयन्ताम् ॥१३॥

संसृष्टं धनमुभयं...नि लयन्ताम् ॥
संसृष्टं धनमुभयं ... नि लयन्ताम् ॥१४॥

## अथ व्युत्क्रमेण पादशः पुनश्चरणम्

शत्रवः पराजितासो अप नि लयन्तां
शत्रवः पराजितासोअप निलयन्ताम्॥१॥

भियं दधाना हृदयेषु शत्रवः
शत्रवः पराजितासो अप नि लयन्ताम् ॥२॥

अस्मभ्यं दत्तां वरुणश्च मन्युः
शत्रवः पराजितासो अप नि लयन्ताम् ॥३॥

संसृष्टं धनमुभयं समाकृतं
शत्रवः पराजितासो अप नि लयन्ताम् ॥४॥

महाधनस्य पुरुहूत संसृजि
शत्रवः पराजितासो अप नि लयन्ताम् ॥५॥

क्रत्वा नो मन्यो सह मेद्येधि
शत्रवः पराजितासो अप नि लयन्ताम् ॥६॥

सहो बिभर्ष्यभिभूत उत्तरं
शत्रवः पराजितासो अप नि लयन्ताम् ॥७

आभूत्या सहजा वज्रसायक
शत्रवः पराजितासो अप नि लयन्ताम् ॥८॥

विद्मा तमुत्सं यत आ बभूथ
शत्रवः पराजितासो अप नि लयन्ताम् ॥९॥

प्रियं ते नाम सहुरे गृणीमसि
शत्रवः पराजितासो अप नि लयन्ताम् ॥१०॥

अस्माकं मन्यो अधिपा भवेह
शत्रवः पराजितासो अप नि लयन्ताम् ॥११॥

विजेषकृदिन्द्र इवानवब्रवः
शत्रवः पराजितासो अप नि लयन्ताम् ॥१२॥

द्युमन्तं घोषं विजयाय कृण्महे
शत्रवः पराजितासो अप नि लयन्ताम् ॥१३॥

अकृत्तरुक् त्वया युजा वयं
शत्रवः पराजितासो अप नि लयन्ताम् ॥१४॥

विशं विशं युधये सं शिशाधि
शत्रवः पराजितासो अप नि लयन्ताम् ॥१५॥

एको बहूनामसि मन्यवीळितः
शत्रवः पराजितासो अप नि लयन्ताम् ॥१६॥

वशी वशं नयस एकज त्वं
शत्रवः पराजितासो अप नि लयन्ताम् ॥१७॥

उग्रं ते पाजो नन्वा रुरुध्रे
शत्रवः पराजितासो अप नि लयन्ताम् ॥१८॥

रुजन् मृणन् प्रमृणन् प्रेहि शत्रून्
शत्रवःपराजितासो अप नि लयन्ताम् ॥१९॥

सहस्व मन्यो अभिमातिमस्मे
शत्रवः पराजितासो अप नि लयन्ताम् ॥२०॥

ओजो मिमानो विमृधो नुदस्व
शत्रवः पराजितासो अप नि लयन्ताम् ॥२१॥

हृत्वाय शत्रून् विभंजस्व वेदः
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२२॥

सेनानीर्नः सहुरे हूत एंधि
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२३॥

अग्निरिंव मन्यो त्विषितः संहस्व
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२४॥

अभि प्रयंन्तु नरों अग्निरूंपाः
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२५॥

तिग्मेषंव आयुंधा संशिशांना
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२६॥

हर्षमाणासो धृषिता मंरुत्वः
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२७॥

त्वया मन्यो सरथंमारुजन्तः
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२८॥

उभा उंपांशु प्रंथमा पिंबाव
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥२९॥

जुहोमिं ते धरुणं मध्वो अग्रम्
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥३०॥

अधा वृत्राणिं जङ्घनाव भूरि
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥३१॥

अभिप्रेहिं दक्षिणतो भंवा मे
शत्रंवः परांजितासो अप नि लंयन्ताम् ॥३२॥

हनाव दस्यू ऋरुत बोध्यापेः
शात्रवः पराजितासो अप नि लयन्ताम् ॥३३॥

मन्यो वज्रिन्नभि मा मा ववृत्स्व
शात्रवः पराजितासो अप नि लयन्ताम् ॥३४॥

प्रतिचीनः संहुरे विश्वधा यः
शात्रवः पराजितासो अप नि लयन्ताम् ॥३५॥

अयं ते अस्म्युप मे ह्यर्वाङ्
शात्रवः पराजितासो अप नि लयन्ताम् ॥३६॥

स्वातनूर्बल देयाय मेहि
शात्रवः पराजितासो अप नि लयन्ताम् ॥३७॥

तं त्वा मन्यो अक्रतुर्जिहीळाहं
शात्रवः पराजितासो अप नि लयन्ताम् ॥३८॥

तव क्रत्वा तविषस्य प्रचेतः
शात्रवः पराजितासो अप नि लयन्ताम् ॥३९॥

अभागः सन्नप परेतो अस्मि
शात्रवः पराजितासो अप नि लयन्ताम् ॥४०॥

अस्मास्वोजः पृतनासु धेहि
शात्रवः पराजितासो अप नि लयन्ताम् ॥४१॥

विश्वचर्षणिः सहुरिः सहावान्
शात्रवः पराजितासो अप नि लयन्ताम् ॥४२॥

स्वयंभूर्भामो अभिमाति षाहः
शात्रवः पराजितासो अप नि लयन्ताम् ॥४३॥

त्वं हि मन्यो अभिभूत्योजाः
शात्रवः पराजितासो अप नि लयन्ताम् ॥४४॥

विश्वा वसून्या भरा त्वं नः
शात्रवः पराजितासो अप नि लयन्ताम् ॥४५॥

अमित्रहा वृत्रहा दस्युहा च
शात्रवः पराजितासो अप नि लयन्ताम् ॥४६॥

तपसा युजा विजहि शत्रून
शात्रवः पराजितासो अप नि लयन्ताम् ॥४७॥

अभीहि मन्यो तवसस्तवीयान्
शात्रवः पराजितासो अप नि लयन्ताम् ॥४८॥

पाहि नो मन्यो तपसा सजोषाः
शात्रवः पराजितासो अप नि लयन्ताम् ॥४९॥

मन्युं विश ईळते मानुषीर्याः
शात्रवः पराजितासो अप नि लयन्ताम् ॥५०॥

मन्युर्होता वरुणो जातवेदाः
शात्रवः पराजितासो अप नि लयन्ताम् ॥५१॥

मन्युरिन्द्रो मन्युरेवास देवः
शात्रवः पराजितासो अप नि लयन्ताम् ॥५२॥

सहस्कृतेन सहसा सहस्वता
शात्रवः पराजितासो अप नि लयन्ताम् ॥५३॥

साह्याम दासमार्यं त्वया युजा
शात्रवः पराजितासो अप नि लयन्ताम् ॥५४॥

सह ओजः पुष्यति विश्वमानुषक्
शत्रवः पराजितासो अप नि लयन्ताम् ॥५५॥

यस्ते मन्यो विधद्वज्रसायक
शत्रवः पराजितासो अप नि लयन्ताम् ॥५६॥

## अथ व्युत्क्रमेण अर्धर्चशः पुनश्चरणम्

भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ १॥

संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ २॥

क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥३॥

आभूत्या सहजा वज्रसायक सहो बिभर्ष्यभिभूत उत्तरम् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥४॥

प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आ बभूथ ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥५॥

विजेषकृदिन्द्र इवानवब्रवः अस्माकं मन्यो अधिपा भवेह ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥६॥

अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥७॥

एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥८॥

उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥९॥

सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१०॥

हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥११॥

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१२॥

तिग्मेषव आयुधा संशिशाना अभि प्रयन्तु नरो अग्निरूपाः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१३॥

त्वया मन्यो सरथमारुजन्तः हर्षमाणासो धृषिता मरुत्वः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१४॥

जुहोमि ते धरुणं मध्वो अग्रम् उभा उपांशु प्रथमा पिबाव ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१५॥

अभिप्रेहि दक्षिणतो भवा मे अधा वृत्राणि जङ्घनाव भूरि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१६॥

मन्यो वज्रिन्नभि मा मा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१७॥

अयं ते अस्म्युप मे ह्यर्वाङ् प्रतिचीनः सहुरे विश्वधा यः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥१८॥

तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वातनूर्बल देयाय मेहि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ १९॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२०॥

विश्वचर्षणिः सहुरिः सहावान् अस्मास्वोजः पृतनासु धेहि ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२१॥

त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमाति षाहः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२२॥

अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२३॥

अभीहि मन्यो तवसस्तवीयान् तपसा युजा विजहि शत्रून् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२४॥

मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ।

भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२५॥

मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२६॥

साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ २७॥

यस्ते मन्यो विधद्वज्रसायक सह ओजः पुष्यति विश्वं मा नुषक् ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥२८॥

* * *

## अथ व्युत्क्रमेण ऋक्शः पुनश्चरणम्

संसृष्टं धनमुभयं... नि लयन्ताम् ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ १ ॥

आभूत्या सहजा ... पुरुहूत संसृजि ॥
संसृष्टं धनमुभयं ...अप नि लयन्ताम् ॥ २॥

विजेषकृदिन्द्रं .. . यत आ बभूथ ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ३ ॥

एको बहूनामसि ...विजयाय कृण्महे ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ४॥

त्वया मन्यो.. . नरो अग्निरूपाः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ५॥

अग्निरिव मन्यो ... विमृधो नुदस्व ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ६॥

अभिप्रेहि ... प्रथमा पिबाव ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ७॥

सहस्व मन्यो ... एकज त्वम् ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ८॥

अयं ते अस्म्युप ... रुत बोध्यापेः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ९ ॥

अभागः सन्नप ... देयाय मेहि ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ १०॥

त्वं हि मन्यो ... पृतनासु धेहि ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ ११॥
अभीहि मन्यो ... भरा त्वं नः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ १२॥
मन्युरिन्द्रो ... तपसा सजोषाः ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ १३॥
यस्ते मन्यो ... सहसा सहस्वता ॥
संसृष्टं धनमुभयं ... अप नि लयन्ताम् ॥ १४॥

## ६. भैरवतन्त्रोक्तमन्युसूक्तविधिः -१

### मन्युसूक्तस्योत्कीलकं शापमोचनप्रकारः

**ईश्वर उवाच –** तारं मायां रमाबीजं पूर्वमुच्चार्य देशिकः ।
मध्ये मन्त्रः प्रयोक्तव्यः अन्ते बीजं समुच्चरेत् ॥१॥
पृथिवीवायुरग्निश्च एतदुत्कीलनं भवेत् ॥
......एवं प्रत्यृचं जपेत् ॥

## ७. भैरवतन्त्रोक्तमन्युसूक्तविधिः -२

**ईश्वर उवाच –** सौरं कामं तथा मायां नारसिंहं वराहकम् ।
पञ्चबीजं समुच्चार्य मध्ये ऋग् योजयेद्बुधः ॥१॥
अन्ते पञ्च पुनर्बीजं विलोमं नैव योजयेत् ।
बीजादौ प्रणवं योज्यं बीजान्ते पुनरुच्चरेत् ॥ .........
एष विद्या मयाख्याता सर्वकार्यार्थसिद्धिदा ॥
मन्युसूक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् ॥
॥ इति भैरवीतन्त्रोक्त मन्युसूक्तविधिः ॥
॥ श्रीमध्वेशार्पणमस्तु ॥

# ग्रन्थऋणम्

## ग्रन्थाः -प्रकाशकाः

१. अथर्ववेदसंहिता - चौखाम्बा

२. अष्टाध्यायीसूत्रपाठः -सम्पा सत्यनारायणशास्त्री -वाराणसी

३. आश्वलायनश्रौतसूत्रम् -.

४. उपनिषद्भाष्यम् -पूर्णप्रज्ञसंशोधनमन्दिरम् - ग्रन्थमाला -१

५. उणादिकोशः-वेदाङ्गप्रकाशः१९३९

६. उपनिषच्चन्द्रिका - ईशावास्यप्रतिष्ठानम्

७. उपनिषद्वाक्यकोशः -

८. ऋग्वेदसंहिता -मूलमात्रम् -

९. ऋग्वेदसंहिता -२९ भागः -महिशूर अरमने प्रकाशनम्।

१०. ऋग्वेदसंहिता -३० भागः महिशूर अरमने प्रकाशनम्।

११. ऋग्वेदसंहिता -सायणभाष्योपेता -भागः १

१२. ऋग्भाष्यम् -प्रथमो भागः -द्वैतवेदान्तफौण्डेशन्।

१३. ऋग्भाष्यम् -द्वितीयो भागः -द्वैतवेदान्तफौण्डेशन्।

१४. ऋग्वेदीयब्रह्मकर्मसमुच्चयः -प्रकाशक -मो.द.नान्दुरकर, अनमोलप्रकाशनम्

१५. ऋक्सन्ध्याभाष्यम् -रामतत्त्वप्रकाश -बेळगांव् १८५०

१६. ऋग्वेदप्रातिशाख्यम् -सरस्वतीभवनग्रन्थमाला -१९०७

१७. ऋक्संहितापदपाठः -. अनमोलप्रकाशन १९९१

१८. ऋक्संहितापदपाठः -.कारोषन् मुद्रणालयः १९४७ मैसूर्

१९. ऐतरेयोपनिषद्भाष्यम् - विश्वेश्वरतीर्थीयसहितम्, आनन्दतीर्थप्रतिष्ठानं

२०. गीताभाष्यम् -जयतीर्थीयटीकासहितम्

२१. छान्दोग्योपनिषद्भाष्यम् - पूर्णप्रज्ञसंशोधनमन्दिरम् - ग्रन्थमाला २०
२२. तत्वोद्योतः -द्वितीयो भागः प्रकाशकाः श्रीश्रीविद्यामान्यतीर्थश्रीपादाः-
२३. तन्त्रसासारसङ्ग्रहः -सम्पा -प्रभञ्जनाचार्यः
२४. तात्पर्यचन्द्रिका -तृतीयो भागः ---द्वैतवेदान्तफौण्डेशन् ।
२५. त्रिविधदेवता-राजा राजेन्द्रलालामित्र -कलकत्ता१८९२
२६. तैत्तरीयसंहिता -भट्टभास्करव्याख्यासहिता -
२७. तैत्तरीयसंहिता -सायणभाष्योपेता -भागः १
२८. दैवतसंहिता -द्वितीयभागः स्वाध्यायमण्डल १९४३ दामोदरसातवाळेकर्
२९. दैवतसंहिता तृतीयभागः स्वाध्यायमण्डल १९४८ दामोदरसातवाळेकर्
३०. द्वादशस्तोत्रम् -सम्पा-प्रभञ्जनाचार्यः,बेङ्गलूरु
३१. नारदीयशिक्षा -मन्त्रालयप्रकाशनम्
३२. न्यायविवरणम् -भावबोधसहितम् - द्वैतवेदान्तफौण्डेशन् ।
३३. निरुक्तम् -आनन्दाश्रमसंस्कृतग्रन्थावलिः -८८ प्रथमो भागः .पुणे
३४. निरुक्तम् -आनन्दाश्रमसंस्कृतग्रन्थावलिः -८८ द्वितीयो भागः पुणे
३५. न्यायसुधा-षट्टिप्पणी -तृतीयभागः
३६. न्यायसुधा-षट्टिप्पणी -
३७. बृददारण्यकोपनिषद्भाष्म् - पूर्णप्रज्ञसंशोधनमन्दिरम् -ग्रन्थमाला -३०
३८. ब्रह्मसूत्रभाष्यम्-सप्तव्याख्योपेतम् प्रथमो भागः द्वैतवेदान्त....
३९. ब्रह्मसूत्रभाष्यम्-सप्तव्याख्योपेतम् ............ द्वैतवेदान्त....
४०. ब्रह्मसूत्रभाष्यम्-सप्तव्याख्योपेतम् चतुर्थो ... द्वैतवेदान्त....
४१. ब्रह्मसूत्रभाष्यदीपिका -प्रथमो भागः,--
४२. भागवतम् यादुपत्यसहितम् तृतीयसम्पुटम् द्वैतवेदान्त....

४३. भागवततात्पर्यम् -(एकादशस्कन्धः) सुधीन्द्रतीर्थीयम् -सम्पा -शेषगिरिआचार्यः मन्त्रालयः

४४. भागवतम् -एकादशस्कन्धः -विजयध्वजीयम् -हैदराबाद् .

४५. मन्युसूक्तार्थः -धीरेन्द्रतीर्थीयव्याख्या -अनु -एस्.वि.भीमभट्टाचार्यः -बेङ्गलूरु

४६. महानारायणोपनिषत् -धीरेन्द्रतीर्थीयव्याख्योपेता

४७. महाभारततात्पर्यनिर्णयः -वादिराजीया -सम्पा--सम्पा- प्रभञ्जनाचार्यः

४८. मन्त्रमहोदधिः -महीधरविरचितः कल्कत्ता -१८९२

४९. मैत्रायणीसंहिता - स्वाध्यायमण्डलपारडी

५०. याज्ञवल्क्यशिक्षा- चौकाम्बा (८५)

५१. विष्णुतत्वविनिर्णयः - प्रकाशकाः श्रीश्रीविद्यामान्यतीर्थश्रीपादाः

५२. विष्णुतत्वविनिर्णयः – पूर्णप्रज्ञसंशोधनामन्दिरम्

५३. वैदिककोष- -सम्पा नारायण बालकृष्ण गोडबोले निर्णयसागर १८१०

५४. वैयाकरणसिद्धान्तकौमुदी -चतुर्थो भागः

५५. सुमध्वविजयः

५६. स्मृतिसन्दर्भः -भाग -४/५

५७. स्वरचन्द्रिका- आनन्दाश्रमग्रन्थालयः -ग्रन्थाङ्कः १३८

५८. कृष्णाचार्यस्मृतिमुक्तावली - कालनिर्णयप्रकरणम्

५९. ऐतरेयारण्यकम् - आनन्दाश्रम ग्रन्थाङ्क ९०

६०. ऐतरेयखण्डार्थ, ताम्रपर्णीय - टि.आर्. कृष्णाचार्य

६१. चरणव्यूहः

- - - - -